॥ श्रीमहागणपतिवाक्यार्थविद्वत्सभा २००८ ॥

॥ श्रीश्रीजगद्गुरु शङ्कराचार्य महासंस्थानम् ,
दक्षिणाम्नाय श्रीशारदापीठम् , शृङ्गगिरिः ॥

**Sri Mahaganapati Vakyartha Vidwat Sabha 2008** – Proceedings of the Vakyartha Vidwat Sadas held in the Sarvadhari year (2008) at Sri Sringeri Sharada Peetham, Sringeri under the Presidentship of ***Jagadguru Sri Sri Bharati Tirtha Mahaswaminah,*** the Jagadguru Shankaracharya of Dakshinamnaya Sri Sharada Peetham, Sringeri.

प्रकाशकः श्रीशङ्कर अद्वैतशोधकेन्द्रम्
श्रीश्रीजगद्गुरु शङ्कराचार्य महासंस्थानम्
दक्षिणाम्नाय श्रीशारदापीठम्
शृङ्गगिरिः ५७७१३९

प्रकाशनसमयः विरोधिवत्सरीयभाद्रपदपूर्णिमा (२००९)

मुखपृष्ठचित्रम् शृङ्गगिरिश्रीशारदापीठाधीश्वरजगद्गुरुशङ्कराचार्यैः
प्रत्यहं समाराध्यमानः श्रीरत्नगर्भगणपतिः

# प्रकाशकीयम्

प्रतिवत्सरमिव अतीतेऽपि हायने श्रीचरणानामाध्यक्षे सम्पन्नायां विद्वत्सभायां चर्चितानां शास्त्रार्थानां सङ्ग्रहोऽस्मिन् ग्रन्थे प्रकाश्यते । विदुषां सकाशादिमानि लेखनानि समवाप्तुं महान् श्रमोऽनुभूयत इति निवेदयितुं नितरां सङ्कुचति नश्चेतः । यद्यपि सभायां स्वोपस्थापितविषयाणामेव सङ्ग्रहोऽत्र विलिख्यत इति नात्र विद्वद्भिरधिकं प्रयसितव्यमस्ति तथापि अनिर्वचनीयान्येव कारणानि तान् प्रतिबध्नन्ति यैस्ते द्रुतं लेखनानि न प्रेषयन्तीति प्रतीमः । प्रार्थयामहे च भगवन्तं तत्प्रतिबन्धकविघाताय । परन्तु सन्ति केचन सहृदयशिरोमणयः ये अविलम्बितमेव लेखनानि प्रयच्छन्तीति तान्नितरामभिनन्दामः । परन्त्विदं निवेदयितुमिच्छामो यत्सर्वेष्वपि सद्भावत्सु आदरो नस्समान इति । पूर्वं केचन विद्वांसः स्वैर्दत्तानि लेखनानि प्रकाश्येरन्न वेति संशेरते स्म । स च संशयः सर्वथैव निर्हेतुक इत्यधुना प्रतिवर्षं प्रकाश्यमानो ग्रन्थोऽयं प्रमाणयति ।

ग्रन्थस्यास्य सज्जीकरणे विद्वान् शिवकुमारः, आनन्दः, त्यागराजः, शिवरामकृष्णश्च नितरां पर्यश्राम्यन् । अतस्ते धन्यवादार्हाः । कल्याणनगर्यां स्थापिते अस्मन्मठीय एव मुद्रणालये मुद्रापितोऽयं ग्रन्थः इति निवेदयितुं मोमुद्यते मे चेतः । तत्रत्यान् कर्मकरान् मनसा अभिनन्दामि । लेखनानि प्रहितवतो विबुधान् सकार्तज्ञ्यं वन्दे । येषां कृपाविशेषात् सर्वमिदं कार्यं सम्यक् समपद्यत तेषां **जगद्गुरु श्रीभारतीतीर्थश्रीचरणानां** चरणसरसिजयोः साष्टाङ्गं प्रणिपाततततिपुरस्सरं ग्रन्थमिमं समर्पयामि ।

इत्थम्
वे.रा.गौरीशङ्करः
निर्देशकः
शङ्कराद्वैतशोधकेन्द्रम् , शृङ्गगिरिः

# विषयानुक्रमणिका

## वेदान्तशास्त्रम्



## न्यायशास्त्रम्

## मीमांसाशास्त्रम्

## व्याकरणशास्त्रम्

# असतः साधकत्वोपपत्तिः

**विद्वान् मणिद्राविडः, मद्रपुरी (चेन्नै)**

असच्छब्देन परमार्थसद्भिन्नं विवक्षितम् । प्रपञ्चमिथ्यात्ववादिनां च तत्साधकहेतुव्याप्त्यादिकं मिथ्येत्यभिमतम् । अत एव न परमार्थसत् । अतोऽसतस्तस्य तत्साधकत्वं नोपपद्यते, उतोपपद्यते इति संशयः । तत्र पूर्वपक्षः – मिथ्यात्वसाधकत्वेनाभिमतहेतुव्याप्त्यादीनां मिथ्यात्वे तत्साधकत्वानुपपत्तिः । परमार्थसत एव साधकत्वात् । तद्भिन्नस्य साधकत्वासंभवात् । साधकत्वं हि सिद्धिजनकत्वम् । जनकत्वं च कार्यनियतप्राक्सत्त्वम् । सत्त्वं च तत्र पारमार्थिकत्वमेव, नान्यत् । तथा हि – न हि तत् धीविषयत्वरूपम् , तस्य तुच्छसाधारण्यात् । नाप्यपरोक्षधीविषयत्वम् , तस्य तुच्छव्यावृत्तत्वेऽपि नित्यातीन्द्रिये तदभावेनासाधकत्वप्रसङ्गात् । अत एव सत्त्वप्रकारकतादृशधीविषयत्वमपि न । नापि त्रिचतुरकक्ष्यास्वबाधिता सत्त्वप्रतीतिः साधकताघटकं सत्त्वम् । "अहं गौरः", "नीलं नभः" इत्यादिप्रतीतेरपि त्रिचतुरकक्ष्यास्वबाधितत्वेन गौरत्व-नीलत्वयोः तादृग्बुद्धिविषयत्वरूपसत्त्वापत्त्या आत्मनो गौरत्वेनानित्यत्वस्य, नभसो नीलरूपवत्त्वेन स्पर्शवत्त्वस्य च सिद्ध्यापत्तेः । अतश्च परिशेषात् परमार्थसत्त्वस्यैव साधकताघटकत्वं वक्तव्यम् । तथा च मिथ्यात्वसाधकानां त्वन्मते तदभावात् न मिथ्यात्वसिद्धिरिति ।

अत्रोक्तं खण्डने – "यादृश्या हि धिया त्रिचतुरकक्ष्याबाधानवबोधविश्रान्तया वस्तुसत्त्वनिश्चयस्ते तादृश्यैव विषयीकृतस्य ममापि कारणतानिश्चयः" इति । तथा च तादृग्बुद्धिविषयत्वमेव साधकताप्रयोजकमिति तदभिप्रायः । आत्मनि, आकाशे च "अहं गौरः", "नीलं नभः" इत्यादि-प्रतीतेस्तु तवापि गौरत्वादिसत्तानिश्चायकत्वं नाभिप्रेतम् । अतः तादृग्बुद्धिविषयत्वमादाय न दोषः ।

ननु प्रत्यक्षे क्लृप्तदोषरहितया धिया वस्तुसत्त्वनिश्चयो ममाभिप्रेतः । निर्दुष्टबुद्धिविषयत्वस्य ब्रह्मणि परमार्थसत्त्वव्याप्यतानिश्चयात् । तथा च प्रपञ्चप्रत्यक्षे क्लृप्तदोषराहित्यात् तेन परमार्थसत्त्वसिद्धिर्दुर्वारेति चेन्न । जगत्सत्त्वबुद्धेर्बाधितत्वेन तत्र निर्दुष्टबुद्धिविषयत्वस्य परमार्थसत्त्वसाधकस्याभावात् ।

ननु बुद्धिविषयत्वस्य साधकताप्रयोजकत्वेऽज्ञातस्य वह्नेर्दाहजनकत्वानुपपत्तिरिति चेन्न । वह्नौ अन्यदीयतादृग्बुद्धिविषयत्वसत्त्वेनादोषात् ।

किञ्च ज्ञाताज्ञातसाधारणं व्यावहारिकं सत्त्वं साधकताप्रयोजकम् । तच्च ब्रह्मज्ञानेतराबाध्यत्वम् । तच्च न परमार्थसत्त्वव्याप्यम् , ब्रह्मज्ञानबाध्येऽपि वृत्तेः । मिथ्यात्वसाधकहेत्वादेश्च तत्सत्त्वान्न तत्साधकत्वा-नुपपत्तिः । न च – परमार्थसद्व्यावृत्तं व्यावहारिकं सत्त्वं वाच्यम् , अन्यथा सत्तात्रैविध्यविभागानुपपत्तेः । तथा च व्यावहारिकं सत्त्वमज्ञानादिसाधके साक्षिणि नास्तीति न तस्य साधकताप्रयोजकत्वमिति वाच्यम्। अज्ञानोपहितस्य साक्षिणोऽपि उपहितरूपेण व्यावहारिकसत्त्वाङ्गीकारात् । अनुपहितेन परमार्थसदाकारेण तस्यासाधकत्वात् ।

वस्तुतस्तु धूमभ्रमादपि वह्निमति वह्निप्रमादर्शनात् , प्रातीतिकादपि विषयसंबन्धात् सुखादिकार्यदर्शनाच्च व्यावहारिकं सत्त्वमपि न साधकताप्रयोजकम् । किन्तु यस्मात् कार्योत्पत्तिः प्रमाणसिद्धा तस्यैव तत्कारणत्वमित्येव स्वीकरणीयम् , न तु व्यावहारिकं परमार्थसदेव वा कारणमिति नियमः । अतश्च मिथ्यात्वसाधकत्वेनाभिमतहेतुव्याप्त्यादीनां परमार्थसत्त्वविरहेऽपि न तत्साधकत्वानुपपत्तिः ।

***

# न विलक्षणत्वाधिकरणम्

**विद्वान् एम्. ए. नागराजभट्टः, शृङ्गगिरिः**

शारीरकमीमांसायां द्वितीयाध्यायस्य प्रथमपादे तृतीयमधिकरणम् "न विलक्षणत्वाधिकरणम्", "न विलक्षणत्वादस्य तथात्वं च शब्दात्" इत्याद्यष्टसूत्रीघटितम् । प्रथमाध्याये "यतो वा इमानि भूतानि जायन्ते" इत्यादिश्रुतिभिः सर्वज्ञं चेतनं ब्रह्म जगतः प्रकृतिः, निमित्तकारणं चेत्युपपादितम् । तच्च युक्तिविरुद्धमित्याक्षिप्यात्र तद्विरोधः परिह्रियते । तथा हि – मृद्विकाराणां घटशरावादीनां मृदन्वितत्व-दर्शनात् , तदितरेषां रुचकादीनां तद्विलक्षणत्वदर्शनाच्च "यो यद्विलक्षणः स न तत्प्रकृतिकः" इति व्याप्तेः सिद्धत्वात् , अस्य जगतोऽचेतनत्वादिना ब्रह्मविलक्षणत्वात् तत्प्रकृतिकत्वं न सम्भवति । ननु सर्वस्यापि जगतो ब्रह्मप्रकृतिकत्वप्रतिपादकश्रुतिबलेन चैतन्यमङ्गीकर्तव्यम् । काष्ठलोष्टादिषु तस्याविभावनं तु स्पष्टचैतन्यानामप्यात्मनां स्वापमूर्च्छाद्यवस्थास्विव परिणामविशेषादित्यसिद्धोऽयं हेतुरिति चेन्न । सर्वस्य चेतनत्वे "विज्ञानं चाविज्ञानं चे"ति कस्यचिद्विभागस्याचेतनत्वबोधकश्रुतिव्याकोपापत्तेः । शुद्ध्यशुद्धित्व-लक्षणविलक्षणत्वस्यापरिहार्यत्वाच्च । न चैवं "मृदब्रवीत्", "ते हेमे प्राणा अहंश्रेयसे विवदमाना ब्रह्म जग्मुः" इत्यादिषु श्रूयमाणोऽचेतनत्वाभिमतानां भूतेन्द्रियाणां वदनसंवदनादिव्यवहार असङ्गतः स्यादिति वाच्यम् । तच्छ्रुतेः भूतेन्द्रियाद्यभिमानिदेवताविषयत्वात् । अत एव "विज्ञानं चाविज्ञानं च" इति श्रुतेः मुख्यार्थकत्वमप्युपपद्यते । अत एव च कौषीतकिनः "एता ह वै देवता अहं श्रेयसे विवदमानाः" इति, "ता वा एताः सर्वा देवता प्राणे निश्श्रेयसं विदित्वा" इति चामनन्ति । अपि च मन्त्रार्थवादेतिहासपुराणादिभ्योऽनुगताः सर्वत्राभिमानिन्यश्चेतना देवता अवगम्यन्ते । तस्माद्विलक्षणत्वात् जगतो ब्रह्मप्रकृतिकत्वं नोपपद्यते इति चेत् , उच्यते । केशनखादीनामचेतनानां चेतनपुरुषप्रकृतिकत्व-दर्शनात् उपदर्शितव्याप्तेर्व्यभिचरितत्वात् पूर्वोक्तानुमानस्य दुष्टत्वात् जगतो ब्रह्मप्रकृतिकत्वे न युक्तिविरोधः। न च केशनखादीनामचेतनपुरुषशरीरप्रकृतिकत्वमेवेति पूर्वोक्तव्याप्तेर्न व्यभिचार इति वाच्यम् । प्राणित्वाप्राणित्वकृतवैलक्षण्यस्य दुष्परिहरत्वेन तत्तादवस्थ्यात् । पुरुषादीनां केशादीनां च स्वरूपादिना बहुवैलक्षण्यसत्वात् बहुवैलक्षण्यमेव तदप्रकृतिकत्वे हेतुरित्यप्यसङ्गतम् । किञ्च जगतो ब्रह्मविलक्षणत्वं नाम समस्तस्य ब्रह्मस्वभावस्याननुवर्तनम् ? यस्य कस्यचित् ? उत चैतन्यस्यैव ? आद्ये समस्तप्रकृतिविकृतिभावोच्छेदप्रसङ्गात् न साध्यसाधनक्षमत्वम् । द्वितीये आकाशादिषु सत्तालक्षणस्य ब्रह्मस्वभावस्यानुवर्तनात् हेत्वसिद्धिः । तृतीये ब्रह्मवादिना समस्तजगतो ब्रह्मप्रकृतिकत्वोपगमात् दृष्टान्तासिद्धिः । किञ्च जगतोऽचेतनप्रधानकार्यत्वे एव सर्वस्याप्यचेतनत्वेन चेतनाचेतनकार्य-विभागोच्छेदप्रसङ्गः। सिद्धान्ते तु विलक्षणत्वहेतोर्दुष्टत्वात् यथाश्रुति चेतनं ब्रह्म कारणं ग्रहीतव्यमिति न दोषः ।

ननु शब्दादिहीनं शुद्धं ब्रह्म तद्विपरीतस्य करणं स्यात्, तर्हि उत्पत्तेः प्राक्कार्यमसदिति असत्कार्यवादः प्रसज्येत इति चेन्न । शब्दादिमत्कार्यस्य "सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद" इत्यादिश्रुत्या सत्यत्वाभावेनेदानीमिवोत्पत्तेः प्रागपि कारणात्मनावस्थानात् ।

नन्वेवं प्रलये ब्रह्मणि लीयमानमशुद्ध्यादिगुणकं कार्यं सलिलमिव लवणमात्मीयेन धर्मेण दूषयेत् इति शुद्धं चेतनं ब्रह्म जगत्कारणमित्यौपनिषदं दर्शनमसमञ्जसं स्यात् । अपि च तदा समस्तस्यापि कार्यस्य कारणेऽविभागापन्नत्वेन नियमकारणाभावात् भोक्तृभोग्यादिविभागेन कार्योत्पत्तिर्न स्यात् । उत्पत्तिनिमित्तानां कर्मादीनां प्रलयेऽपि पुनः सर्गे भोक्तृणामुत्पत्तौ, तथैव मुक्तानामप्युत्पत्तिप्रसङ्गः । यद्यपीतावपि कार्यं कारणाद्विभक्तं तर्हि अपीतिरेव न स्यात्, द्वैतापत्तिश्च स्यादिति चेन्न ।

प्रकृतिमपिगच्छतः कार्यस्य स्वधर्मेण तद्दूषकत्वस्य घटशरावादिषु मृत्प्रकृतिकेषु दृष्टत्वात् , तद्वैपरीत्यस्य च क्वाप्यदृष्टत्वात् समञ्जसमेवेदं दर्शनम् । सलिलं तु लवणस्याप्रकृतित्वाददृष्टान्तः । एवं सुषुप्त्यादौ स्वाभाविकाविभागप्राप्तावपि मिथ्याज्ञानस्यानपोदितत्वात् यथा प्रबोधे पुनर्विभागः, तद्वत् प्रलयेऽपि विभागकारणाज्ञानशक्तेः सत्वात् सर्गकाले भोक्तृभोग्यादिविभागेन कार्योत्पत्तिसम्भवात् द्वितीयदोषोऽपि न । सुषुप्तौ अज्ञानसत्वे, पुनर्विभागेनोत्पत्तौ च "इमाः सर्वाः प्रजाः सति सम्पद्य न विदुः सति सम्पद्यामह इति त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवन्ति तदा भवन्ति" इति श्रुतिर्मानम् । मुक्तानां तु न पुनरुत्पत्तिप्रसङ्गः, सम्यग्ज्ञानेन मिथ्याज्ञानस्य विनाशितत्वात् । प्रलये सर्वकार्यलयाभ्युपगमात् अपीत्यभावापत्यादिकमपि न । किञ्च जगतः शब्दादिहीनप्रधानप्रकृतिकतायामपि विलक्षणत्वेन तत्प्रकृतिकत्वानुपपत्तिः, प्रागुत्पत्तेः शब्दादिमत्कार्यस्यासत्वात् असत्कार्यवादप्रसङ्गः, अपीतौ सर्वकार्यलयात् पुनर्विभागेनोत्पत्त्यभावप्रसङ्गः इत्येवमादयः पूर्वोक्तास्सर्वे दोषाः समाना इति नान्यतरस्मिन्पक्षे ते आपादनीया भवन्ति ।

अपि च कैश्चिदभियुक्तैर्यत्नेनोत्प्रेक्षितानां तर्काणामभियुक्ततरैः, तदुत्प्रेक्षितानामपि ततोऽन्यैश्चाभास्यमानत्वदर्शनात् तर्काणामप्रतिष्ठितत्वेन आगममात्रसमधिगम्येऽर्थे केवलतर्केण विरोधोद्भावनमकिञ्चित्करम् । श्रुतिरप्याह – "नैषा तर्केण मतिरापनेया" इति । ननु केषाञ्चित् तर्काणामप्रतिष्ठितत्वेऽपि सर्वतर्काणामप्रतिष्ठितत्वे न मानम् , अन्यथा विलक्षणत्वतर्काप्रतिष्ठितत्वसाधकतर्कसजातीयत्वरूपतर्कस्याप्यप्रतिष्ठितत्वप्रसङ्गः । लोकव्यवहारोच्छेदप्रसङ्गश्च । अतः प्रतिष्ठितेनैव तर्केण ब्रह्मकारणत्ववादः निराक्रियते इति चेन्न । क्वचित् तर्कस्य प्रतिष्ठायामपि जगत्कारणविषये केवलतर्कस्य स्वातन्त्र्येण प्रवृत्तेरभावात् । वेदान्तप्रतिपाद्याद्वितीयब्रह्मणो रूपाद्यभावात् , लिङ्गाद्यभावाच्च प्रत्यक्षानुमानादिमानान्तरागम्यत्वाच्च । किञ्च एकरूपेणावस्थितं जगत्कारणीभूतं यद्वस्तु, तद्विषयकं ज्ञानं सम्यग्ज्ञानम् , तादृशज्ञानात् मोक्षः इति अभ्युपगन्तव्यम् । परन्तु केनचित् तार्किकेण इदमेव सम्यग्ज्ञानम् इति प्रतिष्ठापिते तदन्येन व्युत्थाप्यते, तेनापि प्रतिष्ठापितं ततोऽन्येन इति परस्परं विप्रतिपन्नतया तर्कोत्थितं ज्ञानं न सम्यग्ज्ञानं भवितुमर्हति । सर्वैरपि तार्किकैर्मिलितैर्निश्चिततर्कोत्था मतिः मोक्षहेतुरित्यपि न सम्यक् । सर्वदेशकालीनतार्किकाणामेकत्र मेलनासम्भवात् । वेदस्य तु नित्यत्वेन सकलदोषरहितत्वात्

तज्जन्यज्ञानस्य सम्यक्त्वं केनाप्यपह्नोतुमशक्यम् । अतः श्रुतिवशेन, तदनुसारितर्कवशेन च चेतनं ब्रह्म जगतः प्रकृतिः निमित्तकारणं च इति सिद्धम् ।

***

# अदृश्यत्वाधिकरणम्

**विद्वान् गोडा वेङ्कटेश्वरशास्त्री, मद्रपुरी (चेन्नै)**

समन्वयाविरोध – साधन – फलाख्याध्यायचतुष्टयात्मकशारीरकमीमांसाशास्त्रे प्रथमाध्याये अस्पष्ट-ब्रह्मलिङ्गकवाक्यसमन्वयप्रधाने द्वितीयपादे षष्ठमिदमदृश्यत्वाधिकरणम् । "अथ परा यया तदक्षरमधिगम्यते । यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुश्रोत्रं तदपाणिपादम् । नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः ॥" (मु.१.१.६) इति मुण्डकोपनिषद्वाक्यं विषयः । अत्र अद्रेश्यं – अदृश्यं ज्ञानेन्द्रियाविषयः । अग्राह्यं – कर्मेन्द्रियाविषयः । अगोत्रं – गोत्रं वंशः, तद्रहितम् । अवर्णं – ब्राह्मणत्वादिहीनम् । इन्द्रियाण्यप्यस्य न सन्तीत्याह – अचक्षुःश्रोत्रं तदपाणिपादमिति । विभुं – प्रभुं । सुसूक्ष्मं – दुर्दर्शत्वात् । नित्यं – नाशरहितम् । अव्ययं – व्ययरहितम् , कूटस्थनित्यमित्यर्थः । अत्र संशयः – किमद्रेश्यत्वादिगुणकः भूतयोनिः प्रधानं स्यात् , उत शारीरः अथवा परमेश्वर इति । अद्रेश्यत्वादिगुणानां ब्रह्म – प्रधानसाधारणत्वात् संशयः । पूर्वं प्रधानविरोधिद्रष्टृत्वादि धर्मश्रवणात् न प्रधानमन्तर्यामि इत्यभिहितम् , इह प्रधानविरोधिधर्माणामश्रवणात् प्रधानमेव अदृश्यत्वादिगुणको भूतयोनिः स्यादिति पूर्वाधिकरणेनास्याधिकरणस्य प्रत्युदाहरणसङ्गतिः । पूर्वपक्षे प्रधानोपास्तिः अथवा जीवोपास्तिः फलं, सिद्धान्ते तु निर्विशेषब्रह्मप्रमितिरिति फलभेदः ।

अत्र भूतयोनिः अचेतनं प्रधानमेव, यतः अक्षरशब्दप्रतिपाद्यभूतयोनित्वमुपपादयितुं ऊर्णनाभि लालाजल–पृथिवी–पुरुषशरीराख्याचेतनानामेव दृष्टान्तत्वेन दर्शितत्वात् "यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति । यथा सतः पुरुषात् केशलोमानि तथाक्षरात्संभवतीह विश्वम्" (मु. १.१.७) इति । तथा लोके सुवर्णप्रकृतिकः कटकादिः सुवर्णसदृशो दृश्यते । तथा रज्जुविवर्तः सर्पभूच्छिद्रादिः रज्जुसदृशाः दृश्यन्ते । न हि कश्चित् रज्ज्वां कुञ्जर इत्यध्यस्यति । जगतः परमात्मकारणकत्वं न संभवति, तत्सादृश्याभावात् । तथा च भूतयोनिः जडा, परिणममानत्वात् सुवर्णवत् , विवर्तमानत्वाद्वा रज्ज्वादिवत् इति प्रयोगः ।

न च "यः सर्वज्ञः सर्ववित्" (मु. १.१.९) इति वाक्यशेषः भूतयोनौ प्रधाने न घटते, जडत्वात् इति चेन्न, यतः "यया तदक्षरमधिगम्यते यत्तदद्रेश्यं..." (मु. १.१.६) इत्यक्षरशब्दप्रतिपाद्यस्य अदृश्यत्वादिगुणकत्वं भूतयोनित्वं च उक्त्वा, अनन्तरं "दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः" (मु. २.१.२) इति अक्षरशब्दवाच्यात् परत्वेन श्रुतस्य पुरुषस्य "यः सर्वज्ञः सर्ववित् ..." (मु. १.१.९) इति सर्वज्ञत्वं शास्ति । तथा च भूतयोनित्वेन कथितं प्रधानमेव अक्षरशब्दवाच्यम् ।

न च "यः सर्वज्ञः सर्ववित्" (मु. १.१.९) इति सर्वज्ञात् नामरूपाद्युत्पत्तिः उच्यते । यत्तदोः नित्यसम्बन्धस्य सत्वात् यच्छब्दनिर्दिष्टसर्वज्ञ एव भूतयोनिः भविष्यति इति कथं प्रधानं भूतयोनिः स्यादिति चेत् , न, "अक्षरात् संभवतीह विश्वं" (मु. १.१.७) इति मन्त्रे अक्षरादिति पञ्चमी उपादाने,

सर्वज्ञमन्त्रे "तस्मादेतद्ब्रह्मनामरूपमन्नं च जायते" (मु. १.१.९) इत्यत्र तस्मादिति पञ्चमी निमित्ते इति भेदात् प्रधानं भूतयोनिः भवितुमर्हतीति ।

अथवा भूतयोनिः शारीरः भविष्यति । यदा योनिशब्दः निमित्तकारणवाची स्यात् तदा जीवः पुण्यपापाभ्यां प्रपञ्चं सम्पादयतीति भूतयोनित्वं तस्यापि निरवद्यम् । सः साक्षिभावेन सर्वज्ञः । सर्वं वस्तु ज्ञाततया, अज्ञाततया वा साक्षिचैतन्यस्य विषयः इत्युक्तेः । कश्चित् किञ्चिज्जानाति इत्येवं सर्वजीवानुगतसाक्षिभावेन जीवः विशिष्यापि सर्वज्ञः भविष्यति । अत एवाध्यासभाष्यादिषु अन्तःकरणादीनां जीव एवाध्यासो दर्शितः । तेषां जीवतादात्म्यप्रतीतिश्चानुभवसिद्धा । मुक्तप्राप्यत्वादिकं च साधकफलावस्थाभेदादिभिः जीव एव सङ्गमयितुं शक्यम् । तथा च शारीरः भूतयोनिः भवितुमर्हति । न परमात्मा कार्यविलक्षणत्वात् । इन्द्रियादिनिषेधानां परमात्मनि अप्रसक्तत्वाच्च इति पूर्वः पक्षः ।

**सिद्धान्तः**

भूतयोनिः परमेश्वर एव, तद्धर्मोक्तेः । तस्य हि, परमेश्वरस्य धर्मः "सर्वज्ञः सर्वविदि" ति अत्र श्रूयते। जडस्य प्रधानस्य सर्वज्ञत्वं कथं सङ्गच्छेत् । नापि जीवस्य उपाधिपरिच्छिन्नस्य । न च सर्वज्ञत्वं अक्षरात्परत्वेन श्रुतपुरुषस्य इति वाच्यम् , यतः "अक्षरात्संभवतीह विश्वं" (मु. १.१. ) इति । प्रकृते भूतयोनिं जायमानप्रकृतित्वेन (उपादानत्वेन) निर्दिश्यानन्तरमपि उपादानत्वेनैव सर्वज्ञं दर्शयति "यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः । तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते" (मु. १.१. ) इति । तथा च निर्देशसाम्येन प्रत्यभिज्ञायमानत्वात् प्रकृताक्षरस्यैव सर्वज्ञत्वं सर्ववित्त्वं च इति सिद्धं भवति । अपि चात्र अक्षरात्परतः परः न कोपि निर्दिश्यते । यतः पूर्वोक्त अद्रेश्यत्वादिगुणकभूतयोन्यक्षरस्यैव "येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्" (मु. १.२.१३) इति वक्तव्यत्वेन प्रतिज्ञातत्वात् । दृष्टान्तदार्ष्टान्तिकयोः सारूप्यनियमोपि "शङ्खः पीतः" इत्यादिषु व्यभिचरितत्वात् । ऊर्णनाभ्यादिदृष्टान्त-प्रतिपादनञ्च अभिन्ननिमित्तोपादानत्वज्ञापनाय न अचेतनत्वसूचनाय इति न दोषः ।

अपि च भूतयोनेः परमात्मत्वे "तपसा चीयते ब्रह्म" इति श्रुतिः, "यः सर्वज्ञः" (मु. १.१.९) इति सार्वज्ञत्वलिङ्गं, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानरूपं लिङ्गं, "स ब्रह्मविद्यां" (मु. १.१.१) इति ब्रह्मविद्यासमाख्या, परविद्यासमाख्या च सन्ति । प्रधानस्य भूतयोनित्वाभावे ईक्षत्यधिकरण सिद्धान्तोक्तयुक्तयश्चात्रानुसन्धेयाः । उपाधिना परिच्छिन्नस्य तनुमहिम्नः जीवस्य सकलजगदुपादानत्वं न संभवति । तस्मात् भूतयोनिः परमात्मैव इति सिद्धम् ।

**विशेषणभेदव्यपदेशाभ्यां च नेतरौ** – "दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाः शुभ्रः" (मु. २.१.२) इति भूतयोनेः जीवे असम्भवद्विशेषदर्शनात् जीवः न भूतयोनिः । तथा "अक्षरात्परतः परः" (मु. २.१.२) इति भेदनिर्देशाच्च प्रधानं न भूतयोनिः ।

**रूपोपन्यासाच्च** – अपि च "एतस्माज्जायते प्राणः" (मु. २.१.३) इति प्राणादिपृथिव्यन्तानां तत्त्वानां सृष्टिमुक्त्वा, तस्यैव भूतयोनेः सर्वविकारात्मकं रूपमुपन्यस्यते । यथा "अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा" (मु. २.१.४)

इति । इदं रूपं सर्वविकारकारणत्वात् परमात्मन एव उपपद्यते । न प्रधाने, तत्र सर्वभूतान्तरात्मत्वासम्भवात् । इदं च रूपं "अहमन्नमहमन्नादः" (तै. ३.१०.६) इतिवत् सर्वात्मत्वविवक्षया उच्यते, न तु विग्रहवत्त्वविवक्षया इत्यदोषः । केचन इदं रूपं हिरण्यगर्भस्य इति वदन्ति । तदानीं रूपोपन्यासः परमेश्वरप्रतिपत्तिहेतुरिति शिवम् ।

***

# द्युभ्वाद्यधिकरणम्

**विद्वान् अनन्तशर्मा भुवनगिरिः, कल्याणनगरी (बेङ्गळूरु)**

इदं शारीरकमीमांसाग्रन्थस्य प्रथमतृतीयस्य प्रथमम् अधिकरणम् ।

मुण्डके एवं श्रूयते – "यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः । तमेवैकं जानथ आत्मानम् अन्या वाचो विमुञ्चथ अमृतस्यैष सेतुः" इति । यस्मिन् आत्मनि द्युपृथिव्यादयः (विराट् हिरण्यगर्भ अव्याकृतानि) कल्पिताः तमात्मानमेकमेव जानथ, अन्याः अनात्मविषयाः वाचः विमुञ्चथ, एषः अमृतस्य सेतुः इति मन्त्रार्थः । अत्र आयतनरूपसामान्यधर्मस्य श्रवणात् , नानार्थक – आत्मशब्दप्रयोगात् , सेतुशब्दप्रयोगाच्च द्युभ्वादीनामायतनं किमात्मा वा अर्थान्तरं वा इति संशयः । अतीतानन्तराधिकरणे (वैश्वानराधिकरणे) उपक्रमस्थस्य वैश्वानर इति सामान्यशब्दस्य उपसंहारस्थद्युमूर्धत्वादिना परमात्मनि व्यवस्था कृता । तद्वत् अत्रापि आयतनत्वरूपसामान्यधर्मस्य उपक्रमस्थस्य उपसंहारस्थसेतुश्रुत्या प्रधाने व्यवस्था करणीया इति दृष्टान्तसङ्गत्या पूर्वपक्षः ।

तथा हि – "अमृतस्य एषः" इति, "सेतुः" इति च श्रवणात् द्युभ्वाद्यायतनं ब्रह्म न भवितुमर्हति । स्वतः अमृतस्य ब्रह्मणः "अमृतस्य" इति अमृतसम्बन्धित्वम् , सेतोरिव पारवत्वं च न युज्येते । "तदेवामृतमुच्यते", "अनन्तमपारम्" इति ब्रह्मविषये श्रवणात् । अर्थान्तरे परिग्रहीतव्ये सांख्यस्मृति-कल्पितं प्रधानमेव द्युभ्वाद्यायतनं भवितुमर्हति । सर्वप्रपञ्चप्रकृतेः तस्य तद्विकारभूतानां द्युभ्वादीना-मायतनत्वं युज्यते । तद्भिन्नस्य आत्मनः सत्त्वात् प्रधानं सेतुरिव वस्तुपरिच्छिन्नम् । सांख्यमते प्रधानपुरुषविवेकज्ञानेन अमृतत्वं लभ्यते । तदर्थं प्रधानस्य याथात्म्यज्ञानमावश्यकमिति प्रधानज्ञानमपि अमृतत्वस्य साधनं भवति । "अमृतस्य सेतुः" इत्यस्य अमृतत्वसाधनमित्यर्थः । प्रधानं न श्रौतमिति यद्यपरितोषः तदा वायुरेव द्युभ्वाद्यायतनम् भवतु । "वायुना गौतम सूत्रेण अयं च लोकः परश्च लोकः सर्वाणि भूतानि सन्दृब्धानि भवन्ति" इति वायोः सर्वलोकाधारत्वश्रवणात् । आत्मशब्दश्रवणात् अत्रापि यद्यसन्तुष्टिः तर्हि जीवात्मा एव द्युभ्वाद्यायतनं भवतु । तत्कर्मोपात्तस्य तत्कर्माधीनोत्पत्तिस्थितिकस्य सर्वस्यापि भोग्यप्रपञ्चस्य भोक्ता शारीर एव आयतनं भवितुमर्हति – इति प्राप्ते सिद्धान्तः ।

**(सू.१) द्युभ्वाद्यायतनं स्वशब्दात् ।**

द्युभ्वाद्यायतनं ब्रह्मैव भवितुमर्हति । स्वशब्दात् इति । अत्र तन्त्रेणोच्चारितस्य सूत्रस्थस्वशब्दस्य आत्मशब्दः, सच्छब्दः, ब्रह्मशब्दः इति त्रयोऽर्थाः । मन्त्रे "तमेवैकं जानथ आत्मानम्" इति द्युभ्वाद्यायतनम् आत्मशब्देन उक्तम् । छान्दोग्ये "सन्मूलाः सौम्य इमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" इति सच्छब्दवाच्यस्य ब्रह्मणः प्रजाद्यायतनत्वं श्रुतम् । तदेव प्रजाद्यायतनम् इह द्युभ्वाद्यायतनमिति निर्दिष्टम् । अयं मन्त्रः ब्रह्मशब्दघटितमन्त्रद्वयसन्दष्टो वर्तते । यथा पुरस्तात् "पुरुष एवेदं विश्वं कर्म तपो ब्रह्म..." इति । उपरिष्टात् "ब्रह्मैवेदममृतम्..." इति । अतः मध्यस्थस्यापि

मन्त्रस्य ब्रह्मप्रतिपादकत्वमवश्यमङ्गीकर्तव्यम् । अत्र आयतन – आयतनवद्भावश्रवणात् , ब्रह्मैवेदमित्यत्र सर्वं ब्रह्म इति सामानाधिकरण्यप्रतिपत्तेः कार्यप्रपञ्चविशिष्टः नानारसः आत्मा अवगन्तव्यः इत्याशङ्का स्यात् । तां निवारयितुं श्रुतिः सावधारणं ब्रवीति “तमेवैकं जानथ” इति । कार्यप्रपञ्चं विद्यया प्रविलाप्य आयतनभूतः आत्मा एक एव ज्ञेयः । सैन्धवघन इव आत्मा एकरसः, प्रज्ञानघन इति श्रूयते । अत्र सामानाधिकरण्यं बाधायाम् । यथा यश्चोरः सः स्थाणुरितिवत् यः प्रपञ्चः तद् ब्रह्म इति ।

यद्यपि अत्र द्युभ्वाद्यायतनं सेतुरिव सेतुः इति सेतुशब्देन उक्तं, तथापि न पारवत्वं तस्य । न हि सर्वसाम्यमुपमायाः । सेतुशब्दः “षीञ् बन्धने” इति धातोः व्युत्पन्नत्वात् बन्धनार्थकः । धारणं बन्धनस्य फलम् । अतः सेतुशब्दस्य धारणे लक्षणा । अमृतशब्दः भावप्रधानः । “अमृतस्य सेतुः” इत्यस्य अमृतत्वस्य धारकम् इत्यर्थः । तच्च ब्रह्मणि युज्यते । आत्मशब्दश्च स्वरसतया ब्रह्मण्येव अन्वेति । अतो द्युभ्वाद्यायतनं ब्रह्मैव ।

मन्त्रस्यास्य उत्तरार्धः अन्यथापि व्याख्यायते । “तमेवैकं जानथ” इत्युक्तमात्मज्ञानम् , “अन्या वाचो विमुञ्चथ” इत्युक्तः अनात्मविषयकवाग्विमोकः एतद्द्वयम् – अन्यवाग्विमोकपूर्वकब्रह्मज्ञानम् – मोक्षस्य साधकमिति अमृतस्य सेतुरित्युच्यते । द्युभ्वाद्यायतनं न सेतुः । अतो न किञ्चिदसामञ्जस्यम् ।

**(सू.२) मुक्तोपसृप्यव्यपदेशात्**

द्युभ्वाद्यायतनम् अविद्यारागद्वेषमोहभयादिदोषैः मुक्तैः उपसृप्यम् इति व्यपदेशो भवति । यथा “भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥” इति । नामरूपविमुक्तैरपि उपसृप्यत्वं व्यपदिष्टम् “तथा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्” इति । ब्रह्मणः मुक्तोपसृप्यत्वं श्रुतिप्रसिद्धम् “यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः । अथ मर्त्यो अमृतो भवति अत्र ब्रह्म समश्नुते” इत्यादौ । प्रधानस्य तु मुक्तोपसृप्यत्वं कुत्रापि न प्रसिद्धम् । अपि च अत्र वाग्विमोकपूर्वकज्ञेयत्वं द्युभ्वाद्यायतनस्य यदुक्तम् तदन्यत्र ब्रह्मविषये एव उक्तमस्ति । यथा “तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः । नानुध्यायाद्बहून् शब्दान् वाचो विग्लापनं हि तत् ॥” इति । अतो द्युभ्वाद्यायतनं ब्रह्मैव ।

**(सू.३) नानुमानमतच्छब्दात् ।**

प्रधानप्रतिपादकशब्द अप्रतिपाद्यत्वादपि द्युभ्वाद्यायतनं न प्रधानम् । अपि च प्रधानभिन्नत्वप्रतिपादक-शब्दोऽपि अत्र भवति । द्युभ्वाद्यायतनविषये उच्यते “यः सर्वज्ञः सर्ववित्” इति । अनेन द्युभ्वाद्यायतनस्य चेतनत्वमवगम्यते । प्रधानं न द्युभ्वाद्यायतनम् । अचेतनत्वात् । अचेतनत्वादेव वायुरपि निराकृतो भवति ।

**(सू.४) प्राणभृच्च ।**

यद्यपि प्राणभृत् चेतनः आत्मशब्दार्हश्च तथापि अन्तःकरणावच्छिन्नस्य तस्य अविभुत्वात् सर्वोपादानत्वप्रयुक्तसर्वज्ञत्वं वा सर्वायतनत्वं वा न सम्भवतीति न सः द्युभ्वाद्यायतनम् ।

**(सू.५) भेदव्यपदेशात् ।**

अस्मिन् मन्त्रे "तमेवैकं जानथ आत्मानम्" इति द्युभ्वाद्यायतनजीवयोः ज्ञेयज्ञातृभावो व्यपदिष्टः । अयं कर्मकर्तृभावः तयोर्भेदमेवावगमयति । एवं शारीरज्ञेयत्वात् द्युभ्वाद्यायतनं न शारीरः ।

**(सू.६) प्रकरणाच्च ।**

इदं परमात्मनः प्रकरणम् । "कस्मिन्नु खलु भगवो विज्ञाते सर्वमिदं विज्ञातं भवती"ति शौनकेन पृष्टः अङ्गिराः सर्वविज्ञानप्रयोजकविज्ञानविषयमेव ब्रवीतीति तु स्पष्टम् । तच्च ब्रह्मैव । छान्दोग्यादिषु ब्रह्मणि ज्ञाते सर्वं ज्ञातं भवतीति प्रतिपादितमस्ति । अतः ब्रह्मप्रकरणादपि "यस्मिन् द्यौः" इति मन्त्रे प्रतिपादितं ब्रह्मैव ।

**(सू.७) स्थित्यदनाभ्यां च ।**

द्युभ्वाद्यायतनं प्रकृत्य उच्यते "द्वासुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन् अन्यो अभिचाकशीति" इति । अस्मिन् मन्त्रे तृतीयपादबोध्यः जीवः, भोक्तृत्वात् । चतुर्थपादबोध्यः ईश्वरः, अभोक्तृत्वे सति प्रकाशत्वात् । ईश्वरः द्युभ्वाद्यायतनत्वेन पूर्वं विवक्षितश्चेत् अत्र तस्य जीवात् पृथग्वचनमवकल्पते । नो चेत् अत्र ईश्वरवर्णनमप्रकृतमसम्बद्धं च स्यात् । जीवस्तु लोकसिद्धत्वात् श्रुत्या तात्पर्येण विवक्षितो न भवति । अतः यस्मिन् द्यौरिति मन्त्रे ईश्वर एव विवक्षितः इति मन्तव्यम् ।

पैङ्ग्युपनिषदा अयं मन्त्रः बुद्धिक्षेत्रज्ञपरत्वेन व्याख्यातः । तथापि न विरोधः । तत्रापि क्षेत्रज्ञः एव यस्मिन् द्यौरिति मन्त्रे प्रतिपादितः, किन्तु अन्तःकरणाद्युपाधिषु अभिमानवान् , प्रतिशरीरं भिन्नः नात्र अभिमतः । अन्तःकरणाद्युपाधिभिर्विना उपलक्ष्यमाणः शुद्धचेतनः एव अत्र प्रतिपाद्यः । अनदनत्वे सति प्रकाशत्वात् तादृश एव क्षेत्रज्ञः सत्त्वात् पृथक्त्वेन प्रतिपादितोऽस्ति । स एव यस्मिन् द्यौरिति मन्त्रे प्रतिपादित इति अस्पष्टब्रह्मलिङ्गकः अयं मन्त्रः ज्ञेये ब्रह्मणि सुष्ठु समन्वितो भवति ।

***

# मायावादखण्डननिरासः

**विद्वान् के.पि. बाबुदासः, कालटी**

द्वैताचार्येण मध्वेन रचितेषु दशप्रकरणेषु तुरीयं भवति मायावादखण्डनम् । तन्निरासाय यत्नः क्रियते मया ।

विविधसंसारिकदुःखदर्शनेन विरक्तस्य शमदमादिमतो मुमुक्षोरधिकारिणः तन्निवृत्त्यै परमानन्दवाप्त्यै च सकलजीवजडात्मकात् प्रपञ्चात् परमार्थत एवात्यन्तभिन्नं निखिलगुणोदारं निरस्तसमस्तदोषं परंब्रह्म प्रतिपादयितुं सकलश्रुतिस्मृतीनां तदुपकरणभूतब्रह्ममीमांसायाश्च प्रवृत्तिरिति द्वैतिनां तत्वम् ।

अद्वैतिनस्तु स्वतः परब्रह्मभूतस्य जीवस्य अज्ञाननिमित्तं दुःखादि तत् अद्वैतज्ञाननिवर्तनीय-मित्यतोऽनर्थहेतोरस्य प्रहाणाय आत्मैकत्वविद्याप्रतिपत्तये सर्वशास्त्रारम्भ इति वर्णयन्ति ।

तन्मतमपाकृत्य स्वमतं समर्थयितुमस्य मायावादखण्डननामकस्य प्रकरणस्यारम्भः ।

अयमत्र द्वैताचार्यस्याशयः । ब्रह्मव्यतिरिक्तं सर्वमपरमार्थभूतमित्यतः जीवब्रह्मैक्यमपि अपरमार्थभूतम् । अतः तत्परतया व्याख्याने वेदादेरनारंभणीयत्वप्रसङ्गः । "विमतमनारंभणीयं अन्यथाप्रतिपादकत्वात् यदित्थं तत्तथा यथा संप्रतिपन्नम्" इति प्रयोगः । विमतं आरंभणीयत्वा-नारंभणीयत्वाभ्यां विमतिविषयीभूतश्रुतितन्मीमांसाशास्त्रम् । अनारंभणीयत्वं प्रेक्षावदुपादेयत्वाभावः । अन्यथाप्रतिपादकत्वमयथार्थप्रतिपादकत्वम् । संप्रतिपन्नमित्यनेन बौद्धादिनास्तिकशास्त्रं विवक्षितम् ।

ननु ऐक्यं परमार्थसदेवेति चेत्तत्किं ब्रह्मस्वरूपातिरिक्तमुतानतिरिक्तम् ? आद्यपक्षे अद्वैतहानिः । द्वितीयपक्षे तु आत्मनः स्वप्रकाशत्वात् शास्त्रस्य सिद्धार्थबोधकत्वम् ।

आत्मनः स्वप्रकाशत्वेऽपि अद्वैतादिविशेषाकारेणानधिगतत्वान्न सिद्धसाधनतेति वक्तुं न शक्यते आत्मस्वरूपस्य निर्विशेषत्वाङ्गीकारात् । ननु शास्त्रं न साक्षादद्वैतप्रतिपादकं, किन्तु आवरणभूताज्ञान-निवर्तकमात्रमेवेति चेन्न । अज्ञानं किमात्मस्वरूपावरणं उत तद्विशेषस्य । नाद्यः, तस्य स्वप्रकाशत्वेन नित्यसिद्धत्वात् । न द्वितीयः, विशेषाभावात् । एवमावरणभूतमज्ञानं न संभवतीत्यतः न तन्निवर्तकत्वेन शास्त्रस्य सिद्धसाधनतापरिहारः । सिद्धसाधनतायां तु शास्त्रस्य अनुपादेयत्वं स्यात् । अनधिगतार्थबोधकं हि प्रमाणमिति त्वन्मतम् ।

अथवा विषयप्रयोजनादिरहितत्वमन्यथाप्रतिपादकत्वम् । अद्वैतिमते अज्ञानासंभवादज्ञातो विषयोऽपि न संभवति । अथ ब्रह्मात्मैक्यं शास्त्रस्य विषयश्चेत् तत्किं आत्मस्वरूपमात्रं उत तदतिरिक्तम् । आद्ये सिद्धसाधनता । द्वितीये सत्यं मिथ्या वा ? नाद्यः, अद्वैतहानिप्रसङ्गात् । नापि द्वितीयः, शास्त्रस्यातत्त्वावेदकत्वप्रसङ्गात्, भेदसत्यताप्रसङ्गाच्च ।

मोक्षो हि प्रयोजनम् । स हि अज्ञाननिवृत्तिरूपः त्वया स्वीकृतः । अज्ञानासंभवे तन्निवृत्तिः कथमुपपद्यते ? अथ आत्मस्वरूपतयैव मोक्षः इष्टश्चेत् शास्त्रप्रवृत्तेः प्रागेव सिद्धत्वात् सः प्रयोजनं न भवति । अज्ञानासंभवेनाविद्यानिवृत्तेः पञ्चमप्रकारतापि निरस्ता भवति ।

एवं विषयप्रयोजनयोरभावादधिकारिणः सम्बन्धस्य चाभावः । अतः जीवब्रह्मैक्यं न शास्त्रेण प्रतिपाद्यते, अपि तु भगवतः विष्णोः सर्वोत्तमत्वस्यैव सर्वशास्त्रप्रतिपाद्यत्वम् ।

अत्र समाधानमुच्यते ।

ब्रह्मस्वरूपमेव शास्त्रेण तात्पर्येण प्रतिपाद्यते, न तु जीवब्रह्मणोरेकत्वम् । सर्वेषां वेदान्तवाक्यानां ब्रह्मस्वरूपे एव तात्पर्यमित्येतत्प्रदर्शितं भगवता बादरायणेन "तत्तु समन्वयात्" इति सूत्रेण । अतः अन्यथाप्रतिपादकत्वरूपहेतुः स्वरूपासिद्धः ।

जीवब्रह्मैक्यस्य परमार्थसत्वे ब्रह्मस्वरूपानतिरेके अद्वैतहानिः अनतिरेके शास्त्रस्य सिद्धसाधनता इत्युक्तम् । अत्रोच्यते । जीवब्रह्मैक्यस्य व्यावहारिकसत्वमेवङ्गीक्रियतेऽस्माभिः न परमार्थसत्वम् ।

आत्मनः स्वप्रकाशत्वमस्माभिरङ्गीक्रियते, निर्विशेषत्वञ्च । शास्त्रं तु अज्ञाननिवर्तकं भवति । अज्ञानं आत्मस्वरूपं तद्विशेषं वा नावृणोति । अवलोकयितुः नयनपथं, दर्शनशक्तिं, आवृणोत्यज्ञानम् । अतः अज्ञानं संभवत्येव । तत्सत्वे "मायां तु प्रकृतिं विद्यात्" इत्यादीनि बहूनि वेदान्तवाक्यानि प्रमाणानि सन्ति ।

एवमज्ञानसंभवात् शास्त्रस्याज्ञातः विषयोऽपि भवति । स्वतः सिद्धमप्यात्मस्वरूपमज्ञानवशादज्ञात-मिव भवति । ऐक्यस्य मिथ्यात्वे भेदस्य सत्यता स्यादित्यपि वक्तुं न शक्यते । यथा ब्रह्मभिन्नत्वादैक्यस्य मिथ्यात्वं तथा भेदस्यापि ।

अज्ञानसंभवात् तन्निवृत्तिरूपः मोक्षोऽप्युपपद्यते । मोक्षस्यात्मस्वरूपत्वात् वस्तुतः सर्वदा सिद्ध एव सः । अत एवोक्तं "विमुक्तश्च विमुच्यत" इति । मोक्षस्य उत्पाद्यत्वं संस्कार्यत्वं विकार्यत्वं प्राप्यत्वं वा नास्ति । किन्तु अज्ञानवशात् साध्य एव मोक्ष इति मन्यन्ते लौकिकाः । अत एव मोक्षः प्रयोजनमित्युच्यते । अस्मन्मते प्राप्तस्यानन्दस्य प्राप्तिः परिहृतस्यानर्थस्य परिहारो मोक्षः प्रयोजनम् ।

एवं विषयप्रयोजनसम्भवादधिकारी सम्बन्धश्च भवतः । अधिकारिसत्वे तु "शान्तो दान्त" इत्यादि श्रुतिर्मानम् ।

"इन्द्रियेभ्यः परा ह्यर्था" इत्यादिश्रुतिः "द्वाविमौ पुरुषौ" इत्यादिस्मृतिश्च अद्वितीयस्य परमार्थवस्तुनः ब्रह्मणः सर्वोत्कृष्टत्वं बोधयतः ।

"भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति" इति सूत्रस्य तु अयमर्थः । छान्दोग्ये वैश्वानरवाक्ये भूम्नः वैश्वानरस्य समस्तोपासनस्यैव ज्यायस्त्वं प्राधान्येन प्रतिपाद्यत्वं, क्रतुवत् । यथा दर्शपूर्णमासादेः क्रतोः साङ्गप्रधानस्यैकस्यैव प्रयोगो विवक्ष्यते, न व्यस्तानामपि प्रयाजादीनां तद्वत् । तथा हि दर्शयति

प्राचीनशालादिभिरुक्तानि व्यस्तोपासनानि निन्दित्वा कैकयेन राज्ञा समस्तोपासनस्यैवोक्तत्वादेकवाक्यता श्रुतेरवगम्यते । इदञ्च सूत्रं न भगवतः विष्णोः सर्वोत्तमत्वप्रतिपादकम् ।

एवमस्मन्मतस्यैव सर्वशास्त्रानुसारित्वमित्येतत् सयुक्तिकविचारेणावगन्तुं शक्यते ।

***

# परसमवेतत्वं द्वितीयार्थः

**विद्वान् के.इ.देवनाथन्, तिरुपति**

व्युत्पत्तिवादरीत्या ग्रामं गच्छतीत्यादौ द्वितीयाया आधेयत्वमिव परसमवेतत्वमपि अर्थो न वेति विचार्यते ।

सम्योगावच्छिन्नव्यापारो गमनम् । सम्योगस्य ग्रामनिष्ठत्वमिव कर्तृभूतस्वनिष्ठत्वमपि वर्तत इति ग्रामं गच्छतीतिवत् स्वं गच्छतीति प्रयोगः स्यात् , स्वनिष्ठसम्योगजनकत्वस्य व्यापारे, तदाधेयत्वस्य च स्वस्मिन् अबाधात् । अतः तद्वारणाय स्वभिन्नसमवेतत्वमपि द्वितीयार्थ इति वक्तव्यम् । तद्घटके भेदे प्रकृत्यर्थस्य ग्रामस्य प्रतियोगितासम्बन्धेनान्वयः । तथा च ग्रामभिन्नसमवेता ग्रामनिष्ठसम्योगजनिका या क्रिया तदाश्रयत्ववान् चैत्रः इति चैत्रो ग्रामं गच्छतीतिवाक्याधीनो बोधः । चैत्रनिष्ठसम्योगजनकक्रियायां स्वसमवेतायां स्वभिन्नसमवेतत्वं बाधितम् इति न चैत्रः स्वं गच्छतीति प्रयोगः ।

यत्र उभयोः मल्लयोः संयोगः, तत्र मल्लान्तरसम्योगजनिकायाः क्रियायाः स्वभिन्नसमवेतत्वं, स्वनिष्ठसम्योगजनकत्वं च वर्तते चेदपि न मल्लः स्वं गच्छतीति प्रयोगः स्वभिन्नसमवेतस्वनिष्ठ-सम्योगजनकक्रियाश्रयत्वस्य स्वस्मिन् बाधात् ।

न च स्वनिष्ठसम्योगजनकक्रियायां स्वाभिन्नसमवेतत्वं बाधितं चेदपि तदविषयकशाब्दबोधः चैत्रः स्वं गच्छतीतिवाक्यात् भवतु तदर्थमात्रतात्पर्येण तथा प्रयोगोऽपि भवतु इति वाच्यम् , परसमवेतत्वा-विषयकस्य द्वितीयाधीनफलजनकत्वबोधस्यानभ्युपगमेन द्वितीयया फलान्विताधेयत्वबोधे परसमवेतत्व-भासकसामग्र्या अपेक्षितत्वात् तस्या अभावे तद्वाक्यात् शाब्दबोधासंभवात् । तथा च परसमवेतत्वं द्वितीयार्थ इति ।

**अत्र पूर्वपक्षः**

स्वभिन्नसमवेतत्वं न द्वितीयार्थः । स्वस्यापि द्वित्वेन स्वभेदवत्वात् चैत्रः स्वं गच्छतीति प्रयोगापत्तिः, द्वित्वावच्छिन्नस्वभेदवत्समवेतत्वस्य स्वनिष्ठसम्योगजनकत्वस्य च तत्र क्रियायां बाधाभावात् । अतः भेदे प्रकृत्यर्थस्य स्ववृत्तिप्रकृत्यर्थतावच्छेदकावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनान्वयो वाच्यः, एवं च स्वस्मिन् द्वित्वावच्छिन्नस्वभेदसत्वेऽपि स्वप्रकृत्यर्थतावच्छेदकचैत्रत्वावच्छिन्नभेदवत्वविरहात् आपत्त्यभावः । एवं च चैत्रो द्रव्यं गच्छति, मल्लो मल्लं गच्छतीतिवाक्यस्य प्रमाणत्वाभावप्रसङ्गः द्रव्यत्वावच्छिन्नभिन्नसमवेतत्वस्य, मल्लत्वावच्छिन्नभिन्नसमवेतत्वस्य च तत्र सम्योगजनकक्रियायां बाधात्।

न च व्यक्तित्वावच्छिन्नप्रतियोगितासम्बन्धेन प्रकृत्यर्थस्य भेदेऽन्वयो वाच्यः, मल्लान्तरनिष्ठसम्योग-जनकक्रियायां मल्लत्वावच्छिन्नभिन्नसमवेतत्वस्य असिद्धत्वेऽपि मल्लनिष्ठतद्व्यक्तित्वावच्छिन्नभिन्न-

समवेतत्वस्य प्रसिद्धत्वम् इति नानुपपत्तिः, एवं चैत्रो द्रव्यं गच्छतीत्यत्राऽपि नानुपपत्तिः, द्रव्यविशेषभिन्नसमवेतत्वस्य चैत्रनिष्ठक्रियायां प्रसिद्धत्वात् इति वाच्यम् , तद्व्यक्तित्वस्यानुपस्थितिकालेऽपि शाब्दबोधस्योदयात् तद्व्यक्तित्वावच्छिन्नप्रतियोगितासम्बन्धविषयक बोधस्य तदोपपादयितुमशक्यत्वात् ।

न च तद्व्यक्तित्वं सम्बन्धघटकतया भासते, सम्बन्धज्ञानस्य विशिष्टबुद्धौ हेतुत्वाभावेन तद्युक्तित्वस्यानुपस्थितावपि तद्व्यक्तित्वावच्छिन्नप्रतियोगितासम्बन्धविषयकः बोधो भवितुमर्हतीति वाच्यम्। तात्पर्यज्ञाने सम्बन्धस्य विशेषणतया ( प्रकारतया ) भानात् , तदर्थं सम्बन्धोपस्थितेः पूर्वमपेक्षितत्वात् तद्व्यक्तित्वस्यानुपस्थितौ तद्घटितसम्बन्धोपस्थितेः पूर्वमभावे तद्व्यक्तित्वावच्छिन्न-प्रतियोगितासम्बन्धेन प्रकृत्यर्थविशिष्टभेदविषयकबोधस्यानुपपत्तेः ।

न च इदं वाक्यं एतद्विषयताविशिष्टशाब्दपरम् इति तात्पर्यज्ञानमेव कारणम् , वैशिष्ट्यं च स्वनिरूपित-संसर्गतानिरूपिततद्धर्मावच्छिन्नविषयताकत्वसम्बन्धेन, एवं च तात्पर्यज्ञानं प्रकारतया संसर्गविषयकं न भवतीति न दोषः। अत्र संसर्गतायां सम्बन्धान्तर्गतायां तद्व्यक्तित्वावच्छिन्नत्वस्य विशेषणत्वेऽपि न क्षतिः, तात्पर्यज्ञाने तद्व्यक्तित्वस्य संसर्गतावच्छेदकतयैव भानात् , अपि च तात्पर्यज्ञानं नानार्थकस्थल एव शाब्दबोधकारणम् इति मते तात्पर्यज्ञानार्थं तत्पूर्वं सम्बन्धोपस्थितेर्नापेक्षेति न तद्व्यक्तित्वावच्छिन्न-प्रतियोगितायाः शाब्दबोधे सम्बन्धतया भानेऽनुपपत्तिरितिवाच्यम् ।

यतः चैत्रो द्रव्यं गच्छति इत्यत्र द्रव्यत्वावच्छिन्नस्य तद्व्यक्तित्वावच्छिन्नप्रतियोगिता न सम्बन्धः । घटवति घटो नास्तीति प्रतीतेरन्यथा आपत्तेः, घटविशेषवति तद्व्यक्तित्वावच्छिन्नप्रतियोगितासम्बन्धेन घटविशिष्टाभावस्य सत्वात् । अतः एकधर्मावच्छिन्नप्रतियोगिताया अन्यधर्मावच्छिन्ननिरूपितसंसर्गत्वं न स्वीक्रियते, तथा च द्रव्यं गच्छतीत्यत्र द्रव्यत्वावच्छिन्नप्रतियोगितैव प्रतियोगिनः अभावांशे सम्बन्ध इति पूर्वोक्तानुपपत्तिः स्यादेव ।

न च द्रव्यं गच्छतीत्यत्र भेदे विशेषणतया द्रव्यत्वोपलक्षितमेव भासताम् । तस्य तद्व्यक्तित्वावच्छिन्न-प्रतियोगिता सम्बन्धश्चेत् न एकधर्मावच्छिन्नप्रतियोगिताया इति नियमस्य विरोध इति वाच्यम् ।

प्रतियोगिविशेषिताभावबुद्धेः विशिष्टवैशिष्ट्यावगाहित्वनियमात् अस्यामभावबुद्धौ विशेषण-तावच्छेदकावच्छिन्नप्रतियोगिताया एव सम्बन्धतया भान संभवात् ।

न च नञुल्लिखिताभावबुद्धिस्थल एव स नियमः प्रकृते द्वितीयोपस्थित एव भेद इति, तस्य प्रतियोगिविशिष्टस्य भेदस्य बुद्धौ विशेषणतानवच्छेदकतद्व्यक्तित्वमपि सम्बन्धघटकं भवितुमर्हतीति वाच्यम् ।

तथा सति स्वस्यापि द्वित्वावच्छिन्नस्वभेदवत्त्वात् स्वंगच्छतीति प्रयोगस्य प्रामाण्यापत्तेः । द्रव्यं गच्छति चैत्र इत्यस्य प्रयोगस्य प्रामाण्यसंपादनेऽपि एतदनुपपत्तेः । एवं च परसमवेतत्वं द्वितीयार्थ इति पक्षो न युक्त इति पूर्वपक्षः ।

**सिद्धान्तः**

भेदप्रतियोगितावच्छेदकत्वं द्वितीयार्थः । तस्य क्रियायामन्वयः, भेदे प्रकृत्यर्थस्य द्रव्यादेराधेयता-संबन्धेन अन्वयः । द्रव्यनिष्ठभेदप्रतियोगितावच्छेदिका द्रव्यनिष्ठसम्योगजनिका चैत्रस्य क्रिया इति नानुपपत्तिः । न हि तादृशक्रियावद्भेदः द्रव्यत्वावच्छेदेन विवक्षित इति नानुपपत्तिः ।

न च विहगो भूमिं प्रयातीतिवत् विहगो विहगं प्रयातीति प्रयोगः स्यात् विहगनिष्ठभूमिसम्योगजनक तत्क्रियायाः विहगान्तरनिष्ठभेदप्रतियोगितावच्छेदकत्वात् , एवं च विहगनिष्ठभेदप्रतियोगितावच्छेदक-विहगवृत्ति सम्योगजनकक्रियाश्रयत्वं विहगे वर्तत इति तादृशप्रयोगापत्तिः इति वाच्यम् ।

परसमवेतत्वस्य द्वितीयार्थत्वं परित्यज्य तस्य सम्बन्धघटकत्वस्वीकारेणादोषात् । प्रकृत्यर्थवृत्तित्व-विशिष्टस्य सम्योगस्य क्रियायां जनकत्व – स्वाश्रयनिष्ठभेदप्रतियोगितावच्छेदकत्वोभयसम्बन्धेनान्वय उपगम्यते । उक्तस्थले भूमिसम्योगजनकक्रियायां तद्विहगविवृत्तित्वविशिष्टसम्योगजनकत्वमस्ति, परं तु विहगवृत्तित्वविशिष्टसम्योगाश्रयतद्विहगनिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति न दोषः, न हि तद्विहग वृत्तित्वविशिष्टसम्योगे तादृशक्रियावतः भेदो भवेत् । विहगान्तरनिष्ठभेदप्रतियोगितावच्छेदकत्वं यद्यपि क्रियायां वर्तते, तथापि विहगान्तरस्य तद्विहगवृत्तित्वविशिष्टसम्योगाश्रयत्वं नास्तीति न दोषः । एवं च परसमवेतत्वं सम्बन्ध घटकमेवेति ।

विहगो विहगेन गम्यते इत्यापत्तेः वारणाय क्रियायाः स्वजन्यत्व, स्वावच्छिन्नभेद-सामानाधिकरण्योभयसम्बन्धेनान्वयः वक्तव्यः ।

चैत्रो द्रव्यं गच्छतीत्यत्र द्रव्यवृत्तित्वविशिष्टसंयोगस्य जनकत्व, स्वाश्रयनिष्ठभेदप्रतियोगिता-वच्छेदकत्वोभयसम्बन्धेन क्रियायामन्वयः, तादृश सम्योगाश्रये क्रियावद्भेदस्य सत्वान्नानुपपत्तिः ।

अस्य परसमवेतत्वस्वरूपस्य विचारः लकारार्थविवरण प्रकरणेऽपि वर्तते ।

####

# अनुगतभ्रमत्वविचारः

**विद्वान् नवीनहोळ्ळः, श्रृङ्गगिरिः**

गदाधरभट्टाचार्यैः अवयवग्रन्थे "जन्यज्ञानविषयत्वरूपं ज्ञाप्यत्वं पञ्चम्यर्थः" इति दीधितेः व्याख्यानावसरे अनुगतं भ्रमलक्षणं प्रदर्शितम् । स्वानुयोगिनिष्ठविशेष्यतानिरूपितत्वस्वप्रतियोगिनिष्ठत्व-स्वावच्छिन्नत्वैतत् त्रितयसम्बन्धेन सम्बन्धविशिष्टान्यप्रकारताशालित्वमिति ।

"ह्रदो वह्निमान्" इति भ्रमे समन्वय इत्थम् । स्वं वह्निसंयोगः तत्प्रतियोगिवह्निनिष्ठत्वं निरुक्तभ्रमीयवह्निप्रकारतायां वर्तते । तत्र वह्निसंयोगावच्छिन्नत्वमपि भवति । किन्तु वह्निसंयोगानुयोगि-पर्वतादिनिष्ठविशेष्यतानिरूपितत्वं नास्ति । अतो निरुक्तप्रकारता निरुक्तत्रितयसम्बन्धेन सम्बन्धविशिष्टा न भवति । अपि तु "पर्वतो वह्निमान्" इत्यादिप्रमीयप्रकारतैव तादृशी । तदन्य "ह्रदो वह्निमान्" इति ज्ञानीयप्रकारतेति ।

वह्निसंयोगमादाय "ह्रदो वह्निमान्" इति भ्रमेऽव्याप्तेर्वारणाय प्रथमसम्बन्धनिवेशः । ह्रदानुयोगिकसंयोगमादाय तत्रैव भ्रमेऽव्याप्तेर्वारणाय द्वितीयसम्बन्धः । वह्निपर्वतसंयोगमादाय "पर्वतः समवायेन वह्निमान्" इति भ्रमेऽव्याप्तेर्वारणाय तृतीयसम्बन्धः ।

ननु समवायैक्यपक्षे समवायेन "वायू रूपवान्" इति भ्रमेऽव्याप्तिः । तदीयरूपनिष्ठप्रकारतायां त्रितयसम्बन्धेन समवायवैशिष्ट्यस्य सत्त्वादिति चेन्न । स्वाश्रयनिष्ठविशेष्यतानिरूपितत्व – स्वनिरूपित प्रतियोगिताश्रयवृत्तित्वस्वनिरूपकसम्बन्धावच्छिन्नत्वैतत्त्रितयसम्बन्धेन संसर्गानुयोगिताविशिष्टान्यत्वस्य विवक्षितत्वात् । समवायैक्येऽपि तदनुयोगिताया भेदेन, रूपनिष्ठप्रकारतायां समवायानुयोगितायाः वायुनिष्ठायाः स्वनिरूपित प्रतियोगिताश्रयवृत्तित्वसन्बन्धेन वैशिष्ट्यस्य विरहेण तद्घटितसम्बन्धत्रयेण वैशिष्ट्यस्य विरहात् निरुक्तानुयोगिताविशिष्टान्यप्रकारताकत्वस्य "वायू रूपवान्" इति ज्ञानेऽक्षततत्वात् ।

अथैवमपि "लोहितः स्फटिकः" इति प्रमायां स्वाश्रयसंयोगेन लौहित्यप्रकारिकायामतिव्याप्तिः । स्वपदेन संयोगस्य परिग्रहे तत्प्रतियोगिनिष्ठत्वस्य लौहित्यनिष्ठप्रकारतायां विरहेण संयोग-विशिष्टान्यत्वसम्भवात् ।

समवायस्य परिग्रहे तत्प्रतियोगिनिष्ठत्वस्य लौहित्यप्रकारतायामक्षतत्वेऽपि तदनुयोगिजपाकुसुमनिष्ठ विशेष्यतानिरूपितत्वस्य तत्र प्रकारतायां विरहेण तस्याः समवायविशिष्टान्यत्वसम्भवात् । न च स्वपदेन परम्परा ग्राह्येति वाच्यम् । परम्परायाः संयोगसमवायघटितायास्ताभ्याम् अनतिरिक्तत्वादिति चेत् । न । स्वानुयोगिनिष्ठविशेष्यतानिरूपितेत्यनेन स्वावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपित संसर्गताश्रयानु-योगिनिष्ठविशेष्यतानिरूपितत्वस्य विवक्षणीयतया, परम्परासम्बन्धस्थले संयोगसमवायादीनां प्रत्येकं संसर्गतास्वीकारेण उक्तदोषवारणसम्भवात् । तथा हि, निरुक्तभ्रमविषयपरम्परायां विशेषणतया घटकः समवायः स्वपदेन गृह्यते । समवायावच्छिन्नलौहित्यनिष्ठप्रकारतानिरूपितस्फटिकनिष्ठविशेष्यता-

निरूपितसंसर्गता न समवायनिष्ठा, अपि तु संयोगनिष्ठैव । तदाश्रयसंयोगानुयोगिस्फटिकनिष्ठविशेष्यता-निरूपितत्वं लौहित्यनिष्ठप्रकारतायामक्षतम् । न च परम्परासंसर्गकस्थले प्रत्येकं संसर्गतास्वीकारे मानाभाव इति वाच्यम् । "पर्वतो वह्न्यभाववान्" इत्याकारकस्य संयोगसम्बन्धावच्छिन्नप्रतियोगिताक-वह्न्यभावावगाहिनो निश्चयस्य "पर्वतः स्वसंयुक्तसमवायेन वह्निमान्" इत्याकारिकां परम्पराघटकसंयोगावच्छिन्नप्रकारताकबुद्धिं प्रति प्रतिबन्धकतापत्तेर्वारणाय, प्रकारतानिरूपितसंसर्गताया विशेष्यतानिरूपितसंसर्गतातो भेदस्य स्वीकरणीयत्वात् ।

केचित्तु – समवायैक्यमते रूपप्रतियोगिकत्वविशिष्टसमवायसंसर्गके "वायू रूपवान्" इति भ्रमेऽव्याप्तेर्वारणाय संसर्गतावच्छेदकविशिष्टान्यप्रकारताशालित्वं विवक्षणीयम् । वैशिष्ट्यं स्वविशिष्ट-पर्याप्तावच्छेदकताकत्व – स्वावच्छिन्नप्रतियोगिनिष्ठत्व – स्वविशिष्टावच्छिन्नप्रकारतानिरूपितविशेष्यता-निरूपितसंसर्गतावच्छेदकीभूतधर्मविशिष्टानुयोगिनिष्ठविशेष्यतानिरूपितत्वैतत्त्रितयसम्बन्धेन । निरुक्त-भ्रमीयसंसर्गतावच्छेदकीभूतरूपप्रतियोगिकत्वविशिष्टावच्छिन्नप्रकारतानिरूपितविशेष्यता निरूपित-संसर्गतावच्छेदकीभूतरूपप्रतियोगिकत्वविशिष्टानुयोगी यो घटादिः, तन्निष्ठविशेष्यता निरूपितत्वस्य निरुक्तरूपनिष्ठप्रकारतायां विरहेण निरुक्तत्रितयसम्बन्धेन संसर्गतावच्छेदकवैशिष्ट्यस्य विरहात् तद्विशिष्टान्यत्वमुपपद्यते । "समवायेन वायू रूपवान्" इति ज्ञानं तु समवायैक्यमते प्रमैव । अतो न तत्राव्याप्तिराशङ्कनीये इत्याहुः ।

तदसत् । "ह्रदो वह्निमान्" इति भ्रमेऽव्याप्तिप्रसङ्गात् । तदीयसंसर्गतावच्छेदकीभूत संयोगत्वविशिष्टपर्याप्तावच्छेदकताकायां तदीयप्रकारतायां संयोगत्वावच्छिन्नो यः पर्वतानुयोगिकसंयोगः तत्प्रतियोगिवह्निनिष्ठत्वस्य, संयोगत्वविशिष्टो यो वह्निसंयोगः तदवच्छिन्नप्रकारता निरूपितविशेष्यता-निरूपितसंसर्गतावच्छेदकीभूतो यो धर्मः संयोगत्वं तद्विशिष्टो यो जलसंयोगः तदनुयोगिह्रदनिष्ठ-विशेष्यतानिरूपितत्वस्य च सत्त्वात् ।

वस्तुतस्तु, रूपप्रतियोगिकत्वविशिष्टसमवायेन "वायू रूपवान्" इति भ्रमे अव्याप्तेर्वारणाय संसर्गताविशिष्टान्यप्रकारताशालित्वमेव विवक्षणीयम् । वैशिष्ट्यञ्च स्वाश्रयावच्छिन्नत्व – स्वाश्रय प्रतियोगिवृत्तित्व – स्वाश्रयावच्छिन्नप्रकारतानिरूपितविशेष्यताविशिष्टसंसर्गताविशिष्टानुयोगितावद् विशेष्यतानिरूपितत्वैतत्त्रितयसम्बन्धेन । अनुयोगितायां संसर्गतावैशिष्ट्यञ्च स्वाश्रयनिरूपितत्व-स्वावच्छेदकावच्छिन्ननिरूपितत्वोभयसम्बन्धेन । निरुक्तभ्रमीयरूपनिष्ठप्रकारतायां निरुक्त तृतीय-सम्बन्धेन वैशिष्ट्यस्य विरहेण तद्विशिष्टान्यत्वस्य सम्भवात् तत्र भ्रमे समन्वयो भवति । तथा हि । स्वपदेन रूपप्रतियोगिकत्वविशिष्टसमवायनिष्ठसंसर्गतायाः परिग्रहे तदाश्रयसमवायावच्छिन्न प्रकारतानिरूपिता या वायुनिष्ठविशेष्यता तन्निरूपिता या रूपप्रतियोगिकत्वविशिष्टसमवायनिष्ठा संसर्गता, स्वाश्रयनिरूपितत्व-स्वावच्छेदकावच्छिन्ननिरूपितत्वोभयसम्बन्धेन तद्विशिष्टा अनुयोगिता न वायुनिष्ठा, अपि तु घटादिनिष्ठैव। तद्वद्घटनिष्ठविशेष्यतानिरूपितत्वं निरुक्तरूपप्रकारतायां नास्ति ।

एवमपि, ह्रदानुयोगिकसंयोगपर्वतानुयोगिकसंयोगाभ्यां "ह्रदो वह्निमान्" इति भ्रमे अव्याप्तिः । तदीयवह्निप्रकारतायां निरुक्तसंयोगद्वयनिष्ठसंसर्गतावैशिष्ट्यस्य सम्बन्धत्रयेण सत्त्वात् । संयोगद्वयस्यापि संयोगत्वेनैव भानेन तृतीयसम्बन्धस्य सूपपादत्वात् । अतस्तृतीयसम्बन्धघटकं विशेष्यतावैशिष्ट्यं स्वनिरूपितत्वस्वासमानाधिकरणावृत्तित्वोभयसम्बन्धेन विवक्षणीयम् । एवं सति, ह्रदनिष्ठविशेष्यता विशिष्टसंसर्गताप्रकृतभ्रमीयसंयोगद्वयनिष्ठसंसर्गता नैव भवति, द्वितीयसम्बन्धबाधात् । अतः प्रकृतभ्रमीय प्रकारतायाः विशिष्टान्यत्वं सम्भवति, नाऽव्याप्तिः ।

न च तादृशविशेष्यतानिरूपितसंसर्गताविशिष्टानुयोगिताव्यापकविशेष्यतानिवेशेनैव निरुक्तदोषवारणं सम्भवति । संयोगद्वयसाधारणसंसर्गताविशिष्टानुयोगितायाः पर्वतेऽपि सत्त्वात् तत्र ह्रदनिष्ठविशेष्यताया विरहात् । तथा च निरुक्तसम्बन्धनिवेशो गौरवाध्देय इति वाच्यम् । तथासति "घटो रूपवान् " इति प्रमायामतिव्याप्तिप्रसङ्गात् , समवायैक्यमते समवायनिष्ठसंसर्गताविशिष्टानुयोगितायाः यावत्समवायि वृत्तितया घटमात्रनिष्ठविशेष्यतायास्तद्व्यापकत्वाऽसम्भवात् ।

न च तद्वारणाय संसर्गताव्यापकप्रतियोगिताकानुयोगिताश्रयविशेष्यता निवेश्या, व्यापकता निरूपकतासम्बन्धेन । तथा च समवायनिष्ठसंसर्गताव्यापकत्वं रूपनिष्ठप्रतियोगितायां, तन्निरूपितानुयोगितासमानाधिकरणत्वं घटनिष्ठविशेष्यतायां चाक्षतमिति निरुक्तप्रमायां नातिव्याप्तिरिति वाच्यम् । तथा सति, भूतलानुयोगिकघटसंयोगपटसंयोगाभ्यां "घटवद् भूतलम्" इति भ्रमेऽव्याप्ति-प्रसङ्गात् । संसर्गताश्रये निरुक्तसंयोगद्वये भूतलनिष्ठानुयोगितायाः स्वनिरूपितप्रतियोगिताकत्वसम्बन्धेन सत्त्वात् ।

न च प्रकारतायां विशेष्यतावैशिष्ट्यनिवेशेऽपि अनुपदोक्तभ्रमेऽव्याप्तिः, तदीयसंसर्गतायाः भूतलनिष्ठ-विशेष्यताऽसमानाधिकरणघटपटसंयोगावृत्तित्वेन भूतल विशेष्यताविशिष्टत्वात् , तादृशसंसर्गता विशिष्टत्वस्य भूतलनिष्ठानुयोगितायां तत्सामानाधिकरण्यस्य च भूतलविशेष्यतायामक्षततत्वादिति वाच्यम्। स्वाश्रयप्रतियोग्यप्रतियोगिकावृत्तित्वेन संसर्गताया विशेषणीयत्वात् । निरुक्तसंयोगद्वयनिष्ठ-संसर्गतायाः स्वाश्रयघटभूतलसंयोगप्रतियोगिघटाप्रतियोगिकपटभूतलसंयोगवृत्तित्वेन अतथात्वात् । एवं सति, विभिन्नानुयोगिकविभिन्नप्रतियोगिकसंयोगाभ्यां "ह्रदो वह्निमान्" इति भ्रमे अव्याप्तिरपि अनेनैव वारिता भवति । अतस्तदव्याप्तिवारकतया स्वासमानाधिकरणावृत्तित्वविशेषणस्य सार्थकतायाः पूर्वोक्तायाः अनुपपत्तावपि विभिन्नानुयोगिकसमानप्रतियोगिकसंयोगाभ्यां भ्रमेऽव्याप्तिवारकतया तत्सार्थक्यमुपपद्यते । तथा हि – दण्डघटसंयोगभूतलघटसंयोगाभ्यां "भूतलं घटवद्" इति भ्रमेऽव्याप्तिः। तदीयसंसर्गतायां स्वाश्रयसंयोगप्रतियोगिघटाप्रतियोगिकसम्बन्धावृत्तिताया अक्षतत्वात् । उक्त-विशेषणदाने तु भूतलनिष्ठविशेष्यताऽसमानाधिकरणे दण्डघटसंयोगे विद्यमानायाः संसर्गतायाः निरुक्तविशेष्यताविशिष्टत्वाभावेन ग्रहणासम्भवान्नाव्याप्तिरिति ।

###

# सत्प्रतिपक्षविभाजकलक्षणविचारः

**विद्वान् राजारामशुक्लः, वाराणसी**

प्रकृतपक्षतावच्छेदकविशिष्टपक्षविषयकग्रहत्वाव्यापिका, प्रकृतसाध्यतावच्छेदकविशिष्टसाध्य-विषयकग्रहत्वाव्यापिका या प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहिग्रहत्वव्यापिका प्रतिबध्यता, तन्निरूपितप्रतिबन्धकतावच्छेदिका सतो तादृशप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयिता-शाल्यनुमितित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदिका यद्रूपावच्छिन्ननिरूपकताकविषयिता, तद्रूपवत्त्वं सत्प्रतिपक्षत्वम् । सत्प्रतिपक्षोन्नायकेऽतिव्याप्तिवारणाय सत्यन्तं, बाधेऽतिव्याप्ति वारणाय च विशेष्यदलम् । अत्र लक्षणे वह्न्यभाववह्न्यभावव्याप्यव्याप्योभयवद्ध्रदेऽतिव्याप्तिं प्रदर्श्य शतकोटिग्रन्थः अवतारितः शतकोटिकारैः, तथा हि, उभयवद्ध्रदत्वावच्छिन्ननिरूपकताकविषयितायां प्रतिबन्धकता-वच्छेदकत्वं तादृशजनकतावच्छेदत्वं च वर्तत एव ।

अत्रेयमाशंका, उक्तदोषवारणाय उन्नेयविषयितायां प्रकृतानुमितित्वव्यापकप्रतिबन्धकतानिरूपित-प्रतिबध्यतावच्छेदकत्वं निवेश्यते । तथा च प्रकृते उन्नेयविषयितापदेन गृहीतायां वह्न्यभावव्याप्यवद्ध्रदत्वावच्छिन्ननिरूपकताकविषयितायां तादृशप्रतिबध्यतावच्छेदकत्वं नास्ति, ह्रदो वह्निमानिति बुद्धेः वह्न्यभावव्याप्यवान् ह्रद इति बुद्धिं प्रत्यप्रतिबन्धकत्वात् । तथा च वह्न्यभाव–व्याप्यवद्ध्रदत्वावच्छिन्नविषयिताया उन्नेयविषयितापदेन धर्तुमशक्यतया नोक्तोभयवद्ध्रदेऽतिव्याप्तिः ।

किञ्चोक्तरीत्या निवेशे सत्प्रतिपक्षोन्नायकेऽप्यतिव्याप्तेरभावात् उक्तरीत्यैव सत्प्रतिपक्षविषयिताया उन्नेयविषयितापदेन धर्तुमशक्यत्वात् सत्यन्तदलमपि नावश्यकम् । एवमुन्नेयविषयितायां प्रकृतानु-मितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वमपि प्रयोजनाभावान्न निवेश्यम् । तथा च प्रकृतानुमितित्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकविषयिताशाल्यनुमितित्वावच्छिन्नजन्ता-निरूपितजनकतावच्छेदिका यद्रूपावच्छिन्ननिरूपकताकविषयिता तद्रूपवत्त्वं सत्प्रतिपक्षत्वमिति लक्षणकरणे महल्लाघवम् ।

न च वह्निव्याप्यवद्ध्रदो घटवानित्यत्र वह्न्यभावव्याप्यवद्ध्रदेऽतिव्याप्तिः, उन्नेयविषयितापदेन गृहीतायां वह्न्यभाववद्ध्रदविषयितायां प्रकृतानुमितित्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकत्वस्य सत्त्वात् वह्न्यभाववत्ताबुद्धिं प्रति वह्निव्याप्यवत्ताबुद्धेः प्रतिबन्धकत्वात् । अतः सत्यन्तदलमावश्यकम् । तन्निवेशे च वह्न्यभावव्याप्यवत्ताबुद्धेः वह्निव्याप्यवत्ताबुद्धिं प्रत्यप्रतिबन्धकत्वेन दोषाभावादिति वाच्यं, प्रकृतपक्षतावच्छेदकविशिष्टपक्षविषयकग्रहत्वाव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकत्वस्यापि उन्नेयविषयितायां निवेशेणोक्तातिव्याप्तेरभावात् , वह्न्यभाववत्ताबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपित-प्रतिबन्धकताया पक्षतावच्छेदकविशिष्टपक्षविषयक – ह्रदो वह्निव्याप्यवान् इति ग्रहत्वाव्यापकत्वाभावात् ।

न चैवं तादृशग्रहत्वाव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वस्योन्नेयविषयितायां निवेशो व्यर्थः, तथा हि काञ्चनमयह्रदो वह्निमान् इत्यत्र काञ्चनमयत्वाभाववध्रदविषयित्वावच्छिन्न–प्रतिबध्यतानिरूपितप्रतिबन्धकतायां काञ्चनमयत्ववान् ह्रद इति ग्रहत्वव्यापकत्वस्यैव सत्त्वात् काञ्चनमयत्वाभावव्याप्यवध्रदेऽतिव्याप्त्यभावात् इति वाच्यं ।

तत्रैव काञ्चनमयत्वाभावव्याप्याभावव्याप्यसाध्यके काञ्चनमयत्वाभावव्याप्यव्याप्यवद्ध्रदेऽति–व्याप्तिवारकतया तत्सार्थक्यसम्भवात् काञ्चनमयह्रदो वह्निमानिति बुद्धेः काञ्चनमयत्वाभावव्याप्यवान् ह्रदः इति बुद्धिं प्रत्यप्रतिबन्धकत्वात् । तन्निवेशे च तादृशबुद्धेः तादृशबुद्धिं प्रति प्रतिबध्यत्वेन दोषानवकाशात् इति चेत् ? अत्रोच्यते, ह्रदो वह्निव्याप्यवानित्यत्र वह्न्यभावव्याप्यवद्ध्रदेऽति व्याप्तिवारणाय सत्यन्तदलसार्थक्यसम्भवात् वह्न्यभाववत्ताबुद्धेः प्रकृतानुमितिं ह्रदो वह्निव्याप्यवानित्याकादिकां प्रति प्रतिबध्यत्वात् । तन्निवेशे च वह्न्यभावव्याप्यवत्ताबुद्धेः प्रकृतानुमितिं प्रति अविरोधित्वेन दोषाभावात् ।

एवं ह्रदो वह्न्यभावव्याप्याभाववह्निव्याप्योभयवानित्यत्र वह्न्यभावव्याप्यवद्ध्रदेऽतिव्याप्तिः वह्न्यभाववत्ताबुद्धेरुक्तरीत्या प्रकृतानुमितिं प्रति प्रतिबध्यत्वात् वह्न्यभावव्याप्यवत्ताबुद्धेश्च तादृशानुमितिं प्रति बाधमुद्रया प्रतिबन्धकत्वाच्च । अतः उन्नेयविषयतायां प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपित-प्रतिबन्धकतावच्छेदकत्वमपि निवेशनीयमेव ।

न चैवं सत्यन्तदलं व्यर्थं वह्न्यभाववत्ताबुद्धेः वह्निव्याप्यवत्तानुमितिं प्रति अप्रतिबन्धकत्वेनैव ह्रदो वह्निव्याप्यवानित्यत्र वह्न्यभावव्याप्यवद्ध्रदेऽतिव्याप्तिवारणसम्भवादिति वाच्यं, तथापि वह्निव्याप्याभाववद् वह्न्यभाववत्कालीनह्रदो वह्निव्याप्यवानित्यत्र वह्न्यभावव्याप्यवद्ध्रदेऽतिव्याप्तिवारकतया तस्याप्यावश्यकत्वात् तत्र वह्न्यभाववत्ताबुद्धेः निश्चयविशिष्टनिश्चयत्वे वह्निव्याप्यवत्ताबुद्धिं प्रति प्रतिबन्धकत्वात् ।

एवञ्च सति ह्रदो वह्न्यभावव्याप्याव्याप्यवह्न्युभयवान् इत्यत्र वह्न्यभावव्याप्यव्याप्यवह्न्यभावो-भयवद्ध्रदेऽतिव्याप्तिः सङ्गच्छते ।

###

# विशिष्टान्तराघटितत्वविशिष्टद्वयाघटितत्वविचारः

विद्वान् श्रीकृष्णशास्त्री जोशी, सातारा

अज्ञानध्वान्तसंहारकारकं तं जगद्गुरुम् ।
ज्ञानचन्द्रोदयार्थं हि श्रीकृष्णः प्रणमाम्यहम् ॥

ननु यद्रूपावच्छिन्नविषयितात्वं प्रकृतानुमितिप्रतिबंधकतावच्छेदकविषयित्वसमानाधिकरणाभावप्रतियोगितावच्छेदकं तद्रूपावच्छिन्नविषयिताशून्ययद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापिका प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपित प्रतिबंधकता तद्रूपवत्वं तत्वम् इत्येवास्तु लक्षणं विशिष्टद्वयाघटितत्वविशिष्टान्तराघटितत्वनिवेशो व्यर्थः । तथा हि वह्न्यभाववज्जलवद्वृत्तिजलवद् ह्रदविषयितायाः तादृशप्रतिबंधकतावच्छेदक वह्न्यभाववज्जलवत्कालीन जलवद् ह्रदविषयित्वाव्यापकत्वेन, मेयत्वविशिष्टव्यभिचारविषतितायाश्च तादृशप्रतिबंधकतावच्छेदकशुद्धव्यभिचार विषयित्वाव्यापकत्वेन च न तत्रातिप्रसङ्गः। न चैवमसंभवः प्रकृतानुमितिप्रतिबंधकतावच्छेदकस्वरूपासिद्ध्यादिविषयित्वाव्यापकत्वस्य बाधादिविषयितायां सत्वादिति वाच्यम् । यद्रूपावच्छिन्नविषयकत्वावच्छिन्ना च प्रकृतानुमितिप्रतिबंधकता तदवच्छेदविषयित्वाव्यापकेति रीत्या निवेशेन तद्वारणात् यतः स्वरूपासिद्धिप्रतिबंधकताया बाधविषयित्वानवच्छिन्नत्वात् । नचैवमपि ह्रदो वह्निमान् धूमादित्यत्र अभाववान् वह्न्यभाववान् अभाववांश्चह्रद इति ज्ञानवैशिष्ट्यावच्छिन्न प्रतिबंधकताया अपि अभाववद् ह्रदत्वावच्छिन्नविषयितात्वेन वह्न्यभाववद् ह्रदत्वावच्छिन्न विषयित्वावच्छिन्नतया तदवच्छेदकत्वस्य शुद्धाभाववद् ह्रदत्वावच्छिन्नविषयितायां सत्वादिति वाच्यम् । स्वावच्छिन्नविषयकत्वावच्छिन्नत्वपदेन स्वावच्छिन्नविषयिताव्यापकत्वस्य प्रतिबंधकतायां विवक्षणात् । तथा च ज्ञानवैशिष्ट्यावच्छिन्ना या पूर्वोक्ता प्रतिबंधता सा न स्वावच्छिन्नविषयिताव्यापिका अतो नोक्ताव्याप्तिः । तथापि धूमव्यभिचारिवह्निमान् धूमवान् – वह्नेरित्यत्र व्यभिचारघटितबाधेऽव्याप्तिः धूमाभाववद् धूमव्यभिचारिवह्निमत्वरूपबाधविषयिताव्यापकव्यभिचारप्रतिबंधकतावच्छेदविषयित्वाव्यापकत्वस्य तादृशबाधविषयितायां सत्वात् तच्छून्यत्वस्य व्यभिचारघटितबाधनिश्चयेऽसत्वात् । स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबंधकतासामान्यावच्छेदकविषयित्वाव्यापकत्वस्य निवेशे च बाधविशिष्टव्यभिचारे धूमाभाववद् ह्रदविशिष्टधूमाभाववद् वृत्तिजलरूपेऽतिव्याप्तिः यतः बाधविशिष्टव्यभिचारविषयिता न कस्या अपि स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबंधकतासामान्यावच्छेदविषयिताया अव्यापिका भवति । ननु व्यभिचारविशिष्टबाधविषयितायाः तादृशानुमितिप्रतिबंधकतासामान्यावच्छेदिकाया अव्यापिका बाधविशिष्टव्यभिचारविषयिता भवतीति नातिव्याप्तिरिति वक्तुं न शक्यते । यतः ह्रदे वह्न्यभावः वह्न्यभाववान् ह्रद इति ज्ञानयोरेकरूपेणाप्रतिबंधकतामते ह्रदवृत्तिवह्न्यभावत्वावच्छिन्नविषयितायाः प्रकृतानुमितिप्रतिबंधकतासामान्यावच्छेदकीभूताया अव्यापिका वह्न्यभाववद् ह्रदत्वावच्छिन्नविषयिता भवति अतः तच्छून्यत्वं वह्न्यभाववान् ह्रद इति निश्चयेऽसत्वात् वह्न्यभाववद् ह्रदादावव्याप्तिः ।

अतस्तद्वारणार्थं स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबंधकतासामान्यावच्छेदकविषयितायां स्वावच्छिन्न-विषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वस्य अवश्यं निवेशनीयतया व्यभिचारविशिष्टबाधविषयितायां तादृशप्रतिबंधकतासामान्यावच्छेदकत्वेऽपि धर्तुमशक्यतया बाधविशिष्टव्यभिचारेऽतिव्याप्तिः । न च तादृशप्रतिबन्धकता सामान्यावच्छेदकविषयित्वाप्रसिद्धा एव नातिव्याप्तिः, इति वाच्यम् । धूमव्याभिचरि-वह्निमान् धूमवान् वह्नेरित्यत्रापि तादृशविषयित्वाप्रसिद्ध्याऽव्याप्तिरिति चेन्न ।

यद्रूपावच्छिन्नविषयितात्वं स्वावच्छिन्नविषयकत्वावच्छिन्नयत्किंचित् प्रतिबन्धकतावच्छेदकविषयित्व-समानाधिकरणाभावप्रतियोगितावच्छेदकमितिरीत्या निवेशे बाधप्रतिबंधकतामादाय व्यभिचारघटितबाधे लक्षणसमन्वयात् । बाधविशिष्टव्यभिचारे तु न किंचिदपि प्रतिबंधकतामादाय लक्षणगमनसंभवः । न च यत्किंचित्वनिवेशादननुगम इति वाच्यम् । प्रकृतानुमितिप्रतिबंधकतावृत्तिरूपवत्वं हेत्वाभासत्वम् ।

रूपे प्रतिबंधकतावृत्तित्वं च- स्वावच्छिन्नविषयकत्वावच्छिन्नत्वस्वावच्छिन्नविषयकत्वनिष्ठावच्छेदकता-निरूपित प्रतिबंधकतावृत्त्युभयावृत्तिधर्मावच्छिन्नावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकता-निरूपितविषयित्वनिष्ठावच्छेदकतानिरूपिताधिकरणनिष्ठावच्छेदकतानिरूपित वृत्तित्वनिष्ठावच्छेदकता-निरूपितभेदनिष्ठावच्छेदकतानिरूपित प्रतियोगित्वनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकता-निरूपितविषयित्वनिष्ठावच्छेदकतानिरूपित शून्यत्वनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकता-निरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपित भेदनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकता-निरूपितावच्छेदकत्वनिष्ठप्रतियोतिताकाभाववत्वोभयसंबन्धेन । तादृशाभाववत्वं च स्वरूप स्वीया अवच्छेदकत्वनिष्ठप्रतियोगितानिरूपकप्रतियोगित्वनिष्ठावच्छेदकतानिरूपकभेदनिष्ठावच्छेदकतानिरूपक-वृत्तित्वनिष्ठावच्छेदकतानिरूपकनिश्चयनिष्ठावच्छेदकतानिरूपकशून्यत्वनिष्ठावच्छेदकतानिरूपकविषयित्व निष्ठावच्छेदकतानिरूपकावच्छेदकत्वनिष्ठावच्छेदकतानिरूपक प्रतियोगित्वनिष्ठावच्छेदकतानिरूपकभेद-निष्ठावच्छेदकतानिरूपक वृत्तित्वनिष्ठावच्छेदकतानिरूपकाधिकरणनिष्ठावच्छेदकतानिरूपकविषयित्व-निष्ठावच्छेदकतानिरूपकावच्छेदकत्वनिष्ठावच्छेदकतानिरूपकोभयावृत्तिधर्मावच्छिन्नावच्छेदकताकत्वोभय संबन्धेन । ननु तथापि – वह्न्यभाववज्जलवद् वृत्ति जलवद् ह्रदेऽतिव्याप्तिर्दुर्वारा यतः तादृशप्रतिबन्धकतावच्छेदविषयितायां अव्यापकविषयिताशून्यज्ञानीयत्वनिवेशेन वह्न्यभाववज्जलवत् कालीनजलवद् ह्रदत्वावच्छिन्नविषयितायाः स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वाभावात् धर्तुमशक्यत्वात् । तद्वारणाय विशिष्टद्वयाघटितत्वनिवेशस्य आवश्यकत्वेऽपि विशिष्टान्तराघटितत्वस्याऽनिवेशप्रयुक्तं लाघवमस्त्येव ।

न चैवमपि ह्रदो वह्निमान् धूमादित्यत्र जलव्यापकवह्न्यभावसमानाधिकरणजलवद् ह्रदरूपसत्प्रतिपक्षेऽव्याप्तिः स्वावच्छिन्नविषयकत्वावच्छिन्न ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकं यज्जलव्यापकवह्न्यभावाधिकरणनिरूपितवज्जलवद् ह्रदत्वावच्छिन्नविषयित्वं तदव्यापकत्वस्य सत्प्रतिपक्षविषयितायां वर्तते, तच्छून्यत्वस्य च सत्प्रतिपक्षनिश्चयेऽसत्वात् इति वाच्यम् । स्वावच्छिन्नविषयकत्वावच्छिन्न प्रतिबन्धकतावच्छेदकं यद्रूपावच्छिन्नविषयित्वमित्यत्र यद्रूपे विशिष्टद्वयाघटितत्वनिवेशेन तद्दोषवारणात् । तथा हि स्वावच्छिन्नविषयकत्वावच्छिन्न यत्किंचित्

प्रतिबन्धकतावच्छेदकविषयितापदेन जलव्यापकवह्न्यभावादिनिरूपितवज्जलवद् ह्रदविषयिता न धर्तुं शक्या यतः सा विशिष्टद्वयाघटित यद्रूपावच्छिन्नविषयिता नास्ति इति सत्प्रतिपक्षे नाऽव्याप्तिः । तथा च स्वावच्छिन्नविषयित्वं, स्वावच्छिन्नविषयित्वावच्छिन्नाया यत्किंचित् प्रतिबंधकता तदवच्छेदकविशिष्टयाघटित स्वावच्छिन्न विषयित्वाव्यापकाविषयिताशून्यज्ञानीययद्रूपावच्छिन्न विषयित्वधिकरणवृत्तिभेदप्रतियोगितावच्छेदकं तद्रूपावच्छिन्नविषयिताशून्ययद्रूपावच्छिन्नविषयिताशालि-निश्चयत्वव्यापिका प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपित प्रतिबन्धकता तद्रूपवत्वं तत्वम् इति लक्षणम् ।

न चैवं मेयत्वविशिष्टसत्प्रतिपक्षेऽतिव्याप्तिः इति वाच्यम् । तस्याः स्व तन्त्रविशिष्टद्वयाघटितत्वनिवेशेनैव वारणात् । न च जलव्यापकवह्न्यभावसमानाधिकरणजलवद् ह्रदरूपसत्प्रतिपक्षे ह्रदो वह्निमान् धूमादित्यादिस्थलीयेऽव्याप्तिः तस्य विशिष्टद्वयघटितत्वात् इति वाच्यम्। विशिष्टद्वय विषयितायां सत्प्रतिपक्षविषयिताभिन्नत्वं देयम् । तथापि गगनाभाववद्भाववत्कालीनघटो गगनवानित्यत्र गगनाभाववत्तादृशघटरूपबाधेऽव्याप्तिः तस्य तादृशविशिष्टद्वयघटितत्वात् ।

###

# व्यधिकरणजागदीश्यनुसारेण उभयवृत्तित्वकल्पविचारः

**विद्वान् गोविन्द सोमेश्वरशास्त्री जोशी, सातारा**

**पूर्वपक्षः**

यत्समानाधिकरणाः साध्यातावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताका यावन्तोऽभावाः दैशिकविशेषणतया उभयवृत्तयस्तत्वम् इति पूर्वपक्षलक्षणम् ।

**उत्तरपक्षः**

तत्रायं प्रश्नः – एतल्लक्षणकरणे पूर्वलक्षणापेक्षया को विशेषो लाभः ?

पूर्वपक्षी – पूर्वलक्षणे स्वस्वप्रतियोगिसामानाधिकरण्यनिवेशो विद्यते तदपेक्षया प्रत्येकाभावस्य उभयवृत्तित्वनिवेशे लाघवम् अस्ति अतः एवमेव लक्षणं सम्यगस्ति, पुनः सर्वत्र केवलान्वयि अकेवलान्वयिसाध्यकेषु सद्धेतुकस्थलेषु लक्षणसमन्वयो भवति, धूमवान्वह्नेः इत्यत्र असद्धेतुकस्थले तत्तदयोगोलकान्यत्वाभावस्यैव यावदन्तर्गतत्वात् तस्य दैशिकविशेषणतया उभयवृत्तित्वाभावात् नातिव्याप्तिः तर्हि इदमेव लक्षणं सम्यक् ।

अत्र यावत्पदसार्थक्येन विना अन्यपदानां सार्थक्यं न संभवति तस्मात् प्रथमतः यावत्पदसार्थक्यं पश्यामः तर्हि धूमवान्वह्नेरित्यत्र व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावमादाय अतिव्याप्तिवारणाय यावत्पदं आवश्यकं, तत्पदे दत्ते सति यावदन्तर्गतस्य तदयोगोलकभेदाभावस्य दैशिकविशेषणतया उभयवृत्तित्वाभावान्नातिव्याप्तिः ।

तदयोगोलकीयरूपध्वंसाभावाभावं गृहीत्वाऽपि तद्दोषनिवारणं भवति, तदभावस्य ध्वंसस्वरूपस्य उभयवृत्तित्वाभावात् नातिव्याप्तिः । तर्हि पुनः यत्सामानाधिकरण्यदलस्य का गतिः यतो हि अयमात्मा ज्ञानात् इत्यत्र आत्मत्वाभावस्य दैशिकविशेषणतया उभयवृत्तित्वसत्वात् तत्र न दोषः । इति चेत् पर्वतो वह्निमान् धूमात् इत्यत्र तद्घटीयरूपध्वंसाभावाभावमादाय अव्याप्तिवारणाय यत्सामानाधिकरण्यदलम् , तदभावस्य उभयवृत्तित्वाभावात् ।

नवीनमतानुसारेण तज्ज्ञानान्यत्वप्रकारकप्रमाविशेष्यत्वाभावमादाय अव्याप्तिवारणाय तद्दलम् । "प्रलयस्य गोध्वंसवत्वेन गवात्यंताभावानधिकरणत्वात् इत्यादि ग्रंथस्वरसेन" तद्घटे काले च दैशिकविशेषणतया उभयवृत्तित्वात् तद्घटीयरूपध्वंसाभावाभावमादाय अव्याप्तेरसम्भवात् तमभावं त्यक्त्वा नवीनैः अन्याभावं पुरस्कृत्य तद्दोषनिवारणार्थं तद्दलसार्थक्यं कृतम् ।

पुनस्तथाऽपि तयोरभावयोः कालिकेन हेतुसामानाधिकरण्यात् तथैव अव्याप्तिरिति चेन्न । स्वरूपेण हेत्वधिकरणवृत्तित्वस्योक्तत्वात् न दोषः । ननु एवं कृते सति वह्निसंयोगाभावाभावमादाय अव्याप्तिवारणाय मूले कृतस्य भावभिन्नत्वनिवेशस्य असंगतिः स्यात् , यतो हि तदभावस्य स्वरूपेण हेतुसामानाधिकरण्याभावादेव न दोषः इति चेन्न ।

भावभिन्नत्वदलस्य स्वरूपेण हेत्वधिकरणवृत्तित्वलाभ एव प्रयोजनकत्वात् न तद्ग्रन्थासंगतिरिति ।

इति लक्षणे कृते सति तत्र साध्यातावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकः इति दलस्याऽपि सार्थक्यं भवति, कथमित्युक्तौ तत्पर्वतीयरूपध्वंसस्वरूपस्य तत्पर्वतीयरूपध्वंसवदन्यत्वाभावस्य उभयवृत्तित्वाभावात् वह्निमान् धूमात् इत्यत्र अव्याप्तिः । तद्वारणार्थं तद्दलम् । तद्दले दत्ते सत्यपि पुनः तथैव अव्याप्तिः कथमित्युक्तौ तत्पर्वतीयरूपध्वंसाभावाभावस्य तादृशध्वंस स्वरूपस्य अव्याप्यवृत्तित्वात् प्रतियोगिवैयधिकरण्यघटितव्यापकतावच्छेदप्रतियोगिताकस्य तस्य उभयवृत्तित्वविरहात् पुनः वह्निमान् धूमात् इत्यादौ अव्याप्तिः इति चेन्न । सामानाधिकरण्येनाऽनवच्छेदकत्वघटितव्यापकताया एवात्र निवेशेन तदभावस्य यावदनन्तर्गततत्वान्नाऽव्याप्तिरिति ।

दैशिकविशेषणतयेतिपदस्य किं प्रयोजनं इति प्रश्ने सति तस्य समाधानम् एवम् , तदयोगोलकभेदाभावस्य यावदन्तर्गतस्यकालिकसंबन्धेन उभयवृत्तित्वात् धूमवान् वह्नेरित्यत्र अतिव्याप्तिवारणाय तद्दलम् , एवं सति तादृशाभावस्य तदयोगोलकत्वस्वरूपस्य दैशिकविशेषणतया उभयवृत्तित्वविरहात् नातिव्याप्तिः।

तथापि पुनः वह्निमान् धूमात् इत्यत्र अव्याप्तिः । कथमित्युक्तौ – गगनाभावतत्पर्वतभेदान्यतरत्वेन गगनाभावतत्पर्वतभेदउभयाभावस्य यावदन्तर्गतस्य दैशिकविशेषणतया उभयवृत्तित्वाभावात् अव्याप्तिरितिचेत् न । सामान्यरूपेण विशेषाभावानभ्युपगमात् ।

अत्र केचित्तु यत्प्रतियोगिताकाभावे स्वाश्रयसामानाधिकरण्यजगद्वृत्तिभिन्नत्व उभयाभावः तादृशप्रतियोगिताकाभावस्य लक्षणघटकतया पूर्वोक्ताभावस्याऽतथात्वान्नाव्याप्तिः इत्याहुः । तदसत् ।

साध्यव्यापकतावच्छेदकप्रतियोगिताकनिवेशस्य व्यर्थत्वापत्तेरिति विभावनीयम् । यतो हि तत्पर्वतीयरूपध्वंसवदन्यत्वाभावस्य तत्पर्वतीयरूपध्वंसस्वरूपस्य अव्याप्यवृत्तित्वात् स्वाश्रयसामानाधिकरण्यजगद्वृत्तिभिन्नत्व उभयाऽभावस्याऽसत्वात् लक्षणाघटकत्वात् नाव्याप्तिः ।

न च तथापि तत्पर्वतान्यत्वविशिष्टवाच्यत्त्वाभावतत्पर्वतान्यत्त्ववाच्यात्त्वो उभयाभावस्य च उभयवृत्तित्वाभावादव्याप्तिरिवाच्यम् । वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नत्वेन तादृशप्रतियोगिताया विशेषणीयतया तदभावस्य यावदनन्तर्गतत्वादिति । उभयवृत्तित्वं च स्वप्रतियोगिवृत्तित्व स्वसामानाधिकरण्य उभयसम्बन्धेन भेदविशिष्टत्वम् , भेदे च प्रतियोगितावदन्यत्व विशेषणीयम् , तेन उभयभेदमादाय न दोषः । प्रतियोगितावत्ता च स्वनिरूपकत्वस्वसामानाधिकरण्योभय सम्बन्धेन । आधेयता सम्बन्धेन उभयवत्वमेवोभयवृत्तित्वमित्यपिकेचित् इति ।

अथात्र अयोगोलकभेदाभावस्य अयोगोलकत्वस्वरूपतया तस्य स्वरूपेण उभयवृत्तित्वविरहादेव नातिव्याप्तिः सम्भवति इति तत्तदयोगोलकभेदाभावमादायाऽतिव्याप्तिवारणं कथं कृतमिति चेन्न । अभावाभावस्य अतिरिक्ततामते तस्य स्वरूपेणोभयवृत्तित्वात् , उभयमतसाधारण्यानुरोधेन तत्तदयोगोलकान्यत्वाभावस्य ग्रहणात् । तर्हि एवमेव लक्षणं अस्तु इति पूर्वपक्षग्रंथः । तन्मन्दम् ।

**उत्तरपक्षिणाम् अयमाशयः**

तादृशयावदभावे स्वरूपेणोभयवृत्तित्वनिवेशे वह्निसंयोगात्मकस्य वह्निसंयोगाभावाभावस्य हेतुसमानाधिकरणत्वेन यावदन्तर्गततया वह्निसंयोगस्य समवायेनोभयवृत्तित्वेपि स्वरूपेणोभयवृत्तित्वाभावात् वह्निमान् धूमात् इत्यादौ अव्याप्तिस्यादिति नोभयवृत्तित्वकल्पः समीचीन इति ।

अथ संयोगाभावाभावमादायाप्यव्याप्तिः सम्भवे वह्निसंयोगात्मकाभावपर्यन्तानुधावनं व्यर्थमिति चेन्न, प्राचां मते द्रव्ये संयोगसामान्याभावे मानाभावेन महानसादौ वह्नेः सत्वेन संयोगसामान्याभावस्यचासत्वेन संयोगाभावाभावीय प्रतियोगितायाः वह्न्यात्मकसाध्यव्यापकतानवच्छेदकत्वेन संयोगाभावाभावस्य यावदनन्तर्गतत्वात् । वस्तुतः वह्न्यात्मकं संयोगात्मकञ्चाभावमादायेत्यर्थकल्पने न काप्यनुपपत्तिरिति । अथ एवमपि संयोगाभावाभावमादाय सर्वत्र असंभवसंभवेऽव्याप्तिकथनं जगदीशस्य नोचितमिति चेन्न, प्रमेयवान् घटभेदत्वात् इत्यत्र संयोगात्मकाभावस्य हेतुसामानाधिकरण्यविरहेण अभावान्तरमादाय लक्षणसमन्वयात् । ननु हेतुसमानाधिकरणाऽभावे भावभिन्नत्वनिवेशेनाऽव्याप्तिः, वह्निसंयोगाभावाभावस्यभावत्वात् ।

अत्रेदं तत्वम् , व्यभिचारिहेतौसाध्याभावं तत्तद्व्यभिचारनिरूपकाधिकरणभेदाभावं वा आदाय दोषो निरसनीयः । तद्घटभिन्नं घटत्वात् इत्यादौ तु तद्घटभेदाभाव एव, तस्य च तद्घटत्वस्वरूपत्वात् भावभिन्नत्वाभावेन न लक्षणघटकत्वम् , अपितु घटत्वादिना तद्घटभेदाभावस्यैव, तस्य च उभयवृत्तित्वात् भवत्यतिव्याप्तिरिति । ननु हेतुसमानाधिकरणाभावे भावभिन्नत्वनिवेशे तत्तदयोगोलक भेदाभावस्य तत्तदयोगोलकत्वस्वरूपस्य भावभिन्नत्वाभावत्वेन यावदनन्तर्गततया यावदन्तर्गतस्य धूमाभावस्य च उभयवृत्तित्वेन धूमवान् वह्नेः इत्यादि प्रसिद्धस्थलेऽतिव्याप्तिसंभवे स्थलान्तरानुधावनं व्यर्थमितिचेन्न, तत्तदयोगोलकवृत्तिरूपध्वंसाभावाभावस्यापि यावदन्तर्गततया तस्य च उभयवृत्तित्वाभावेनातिव्याप्तिविरहात् । न च तद्घटभिन्नघटत्वात् इत्यत्रापि तद्घटवृत्तिरूपध्वंसात्मकाभावस्य यावदन्तर्गतस्योभयवृत्तित्वविरहेण नातिव्याप्तिरीति वाच्यम् , तद्रूपभिन्नं गुणत्वादित्यत्र तद्रूपभेदाभावस्य तद्रूपत्व स्वरूपत्वेन भावत्वात् , घटत्वेन तद्रूपभेदाभावस्यैव यावदन्तर्गततया तस्य चोभयवृत्तित्वादतिव्याप्तेः । अत एव तद्घटभिन्नं घटत्वादित्यादावित्यत्र आदिपदम् उपात्तमिति शम् ।

###

# अव्यापकविषयताशून्यत्वविचारः

**विद्वान् गणपतिशुक्लः, वाराणसी**

यद्रूपावच्छिन्नविषयताशालिनिश्चयत्वव्यापिका प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपित-प्रतिबन्धकता तद्रूपवत्त्वमिति हेत्वाभाससामान्यलक्षणम् ।

अस्मिन् लक्षणे ह्रदो वह्निमान् जलादित्यत्र वह्न्यभाववद् ह्रदरूपबाधे असम्भवः । अत्र यद्रूपपदेन वह्न्यभाववद् ह्रदत्वं तद्रूपावच्छिन्नविषयतानिरूपितविषयिताशालिनिश्चयः जातित्वेन ह्रदत्वावगाहि-जातिमान् वह्न्यभाववान् इत्याकारकनिश्चयः तादृशनिश्चयत्वव्यापिका ह्रदो वह्निमानित्याकारकबुद्धित्वा-वच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकता नास्ति । अतः असम्भवः । यतो हि ह्रदत्वनिष्ठनिरवच्छिन्ना-वच्छेदकतानिरूपितह्रदनिष्ठविशेष्यतानिरूपितवह्निनिष्ठप्रकारताशालिसमूहालम्बनात्मकानुमितिं प्रति ह्रदत्वनिष्ठनिरवच्छिन्नावच्छेदकतानिरूपित ह्रदनिष्ठविशेष्यतानिरूपितवह्न्यभावनिष्ठप्रकारताशालिनिश्च-यस्यैव समानाकारकत्वेन प्रतिबन्धकत्वम् । न तु जातित्वादिना ह्रदत्वावगाहिजातिमान् वह्न्यभाववानित्याकारकासमानाकारनिश्चयस्य । अत्र ह्रदत्वनिष्ठनिरवच्छिन्नावच्छेदकता नास्ति । किन्तु सावच्छिन्ना जातित्वावच्छिन्ना ह्रदत्वनिष्ठावच्छेदकता वर्तते ।

असम्भवदोषवारणार्थम् अव्यापकविषयिताशून्यत्वं तादृशनिश्चये निवेशनीयम् । तदित्थम् - यद्रूपा-वच्छिन्नविषयितात्वं यादृशविशिष्टविषयकत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकं तद्रूपावच्छिन्न–विषयताशून्यत्वम् । तथा च लक्षणप्रकारः – यद्रूपावच्छिन्नविषयितात्वं यद्रूपावच्छिन्नविषयकत्व-समानाधिकरणाभावप्रतियोगितावच्छेदकं तद्रूपावच्छिन्नविषयताशून्ययद्रूपावच्छिन्नविषयकानाहार्या-प्रामाण्यज्ञानानास्कन्दितनिश्चयत्वव्यापिका प्रकृतानुमितित्वव्यापक प्रतिबध्यतानिरूपितप्रतिबन्धकता तद्रूपवत्त्वम् ।

एवञ्च ह्रदो वह्निमान् जलादित्यत्र वह्न्यभाववद् ह्रदत्वावच्छिन्नविषयतासमानाधिकरणाभावः वह्न्यभाववज्जातिमत्वावच्छिन्नविषयितात्वावच्छिन्नाभावः तत्प्रतियोगितावच्छेदकं वह्न्यभाववज्जाति-मत्वावच्छिन्नविषयितात्वं तद्रूपावच्छिन्नविषयताशून्यत्वं जातिमान् वह्न्यभाववान् इत्याकारकनिश्चये नास्तीति नासम्भवः ।

तदुपरि उच्यते – पक्षतावच्छेदकांशे अन्याप्रकारकत्वनिवेशनेनैव असम्भववारणं सम्भवति । किं तावत् पक्षतावच्छेदकांशे अन्याप्रकारकत्वम् इति चेत् पक्षतावच्छेदकनिष्ठविशेष्यतानिरूपित किञ्चिन्निष्ठप्रकारताशून्यत्वम् । तथा च प्रकृते पक्षतावच्छेदकीभूतह्रदत्वनिष्ठविशेष्यतानिरूपितजातित्व-निष्ठप्रकरता तच्छून्यत्वस्यजातिमान् वह्न्यभाववानित्याकारकनिश्चये असत्वात् तादृशनिश्चयस्य

यद्रूपावच्छिन्नविषयकनिश्चयपदेन धर्तुमशक्यत्वात् । वह्न्यभाववान् ह्रदः इत्याकारकनिश्चयस्यैव धर्तुं शक्यत्वात् नासम्भवः ।

किमर्थं गुरुभूताव्यापकविषयताशून्यत्वं यद्रूपावच्छिन्नविषयताशालिनिश्चये निवेशनीयम् ।

तदुपरि उच्यते जलवान् वह्निमान् धूमादित्यत्र वह्न्यभाववत् जलवद् रूपबाधे अव्याप्तिः । अत्र पक्षतावच्छेदकजलनिष्ठविशेष्यतानिरूपिता जलत्वनिष्ठाप्रकारता तादृशप्रकारताशून्यत्वस्य वह्न्यभाववान् जलवान् इत्याकारकनिश्चये असत्वादव्याप्तिः स्यात् ।

एवं ह्रदो वह्निमान् ह्रदत्वादित्यत्र वह्न्यभाववद् वृत्तिह्रदत्वरूपव्यभिचारे अव्याप्तिः । यतो हि वह्न्यभाववद्वृत्तिह्रदत्वरूपव्यभिचारेविषयनिश्चये पक्षतावच्छेदकीभूतह्रदत्वनिष्ठविशेष्यतानिरूपिता ह्रदत्वनिष्ठा प्रकारता तच्छून्यत्वस्य अभावात् तादृशनिश्चयपदेन तादृशनिश्चयस्य धर्तुमशक्यत्वात् निरूक्तनिश्चयवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयताव्यापकत्वस्य वह्न्यभाववद्वृत्तिह्रदत्वरूपव्यभिचार-प्रतिबन्धकतायामभावेन, लक्षणायोगात् ।

यदि अवच्छेदकतासम्बन्धावच्छिन्नप्रतियोगिताकपक्षतावच्छेदकत्वाभाववद् धर्मनिष्ठप्रकारता-निरूपितपक्षतावच्छेदकनिष्ठविशेष्यताशून्यत्वं तादृशनिश्चये निवेश्यते । तदा जलवान् वह्निमान् धूमादित्यत्र वह्न्यभाववद् जलवद् रूपबाधे नाव्याप्तिः । यतो हि अवच्छेदकतासम्बन्धेन पक्षतावच्छेदकत्वं जलत्वे वर्तते । तथा च अवच्छेदकतासम्बन्धावच्छिन्नप्रतियोगिताकपक्षतावच्छेदकत्वाभाववद् धर्मपदेन जलत्वं नैव धर्तुं शक्यते किन्तु द्रव्यत्वादिकं तन्निष्ठप्रकारतानिरूपित जलत्वनिष्ठविशेष्यताशून्यत्वस्य वह्न्यभाववान् जलवानित्याकारकनिश्चये सत्वेन तादृशनिश्चयत्वव्यापिका प्रकृतानुमितित्वव्यापक-प्रतिबध्यतानिरूपितप्रतिबन्धकता वर्तते तद्रूपवत्वं वह्न्यभाववज्जलवद् रूपबाधे सत्वाल्लक्षणसमन्वयः ।

परन्तु एवं निवेशकरणेऽपि पूर्वोक्तव्यभिचारे अव्याप्तिः सुस्थिरैव । यतो हि ह्रदो वह्निमान् ह्रदत्वादित्यत्र अविशेषितधर्मावच्छिन्नपक्षस्थले वह्न्यभाववद्वृत्तित्वविशिष्टह्रदत्वरूपव्यभिचारे अव्याप्तिः । तथा हि अवच्छेदकतासम्बन्धावच्छिन्नप्रतियोगिताकपक्षतावच्छेदकत्वाभाववद् धर्मपदेन वह्न्यभाववद्वृत्तित्वरूपो धर्मः तन्निष्टप्रकारतानिरूपितह्रदत्वनिष्ठविशेष्यताशून्यत्वस्य वह्न्यभाववद्वृत्तित्वविशिष्टह्रदत्वमित्याकारक-निश्चये अभावात् अव्याप्तिः ।

नचैतद्दोषवारणार्थं यद्रूपावच्छिन्नविषयताशालिनिश्चये तादृशविशिष्टाघटकपदार्थाविषयकत्वं निवेशनीयम् । तथा च व्यभिचारे च नाव्याप्तिः । अत्र यद्रूपावच्छिन्ने लक्षणसमन्वयः तद्रूपावच्छिन्नाविषयकप्रतीतिविषयः यः पदार्थः तद्विषयताशून्यत्वम् । एवं वह्न्यभाववद् ह्रदत्वावच्छिन्ना-विषयकप्रतीतिः जातिमानित्याकारिका तद् विषयः पदार्थः जातित्वादिपदार्थः तद्विषयताशून्यत्वस्य जातिमान् वह्न्यभाववान् इत्याकारकनिश्चये असत्वात् नाव्याप्तिः ।

एवं वह्न्यभाववद्वृत्तित्वविशिष्टह्रदत्वावच्छिन्नाविषयकप्रतीतिः जातिमान् इत्याकारिका तद्विषयः पदार्थः जातित्वादिपदार्थः तद्विषयताशून्यत्वस्य वह्न्यभाववद्वृत्तित्वविशिष्टह्रदत्वमिति निश्चये सत्वाल्लक्षणसमन्वयः ।

तथा सति सर्वं गगनवद् इत्यत्र गगनाभाववत् सर्वरूपबाधे अव्याप्तिः । यतो हि गगनाभाववत् सर्वत्वावच्छिन्नाविषयकप्रतीतेरप्रसिद्धत्वात् । अत्र सकलस्यैव वस्तुतः बाधघटकत्वात् अप्रसिद्ध्या अव्याप्तिः ।

अतः जातिमान् वह्न्यभाववानित्याकारकनिश्चयमादाय यः ह्रदो वह्निमान् जलादित्यत्र वह्न्यभाववद् ह्रदे असम्भवः पूर्वमागतः तद्दोषवारणार्थम् अव्यापकविषयताशून्यत्वम् अवश्यं निवेशनीयम् ।

###

# येनाङ्गविकारः इति सूत्रार्थविचारः

**विद्वान् कं. वि. वासुदेवन् नम्पूतिरिः, गुरुवायुपुरम्**

विभक्त्यर्थनिर्णयोक्तरीत्या येनाङ्ग विकारः इति सूत्रस्यार्थः किञ्चिद् विचार्यते । येन अङ्गविकार इति छेदः । अङ्गस्य विकारः अङ्गविकारः इति विग्रहः। अङ्गानि अस्य सन्तीति अङ्गं शरीरम् । अर्श आद्यच् । येन इत्यनेन प्रकृत्यर्थभूतमङ्गं परामृश्यते । न हि अविकृतेन अङ्गेन अङ्गिनः विकारः सम्भवति । तथा च येनाङ्गेन विकृतेनाङ्गिनः विकारः लक्ष्यते ततः तृतीयाविभक्तिर्भवतीति सूत्रार्थः । अक्ष्णा काण इत्युदाहरणम् । अत्राक्षिपदं गोलकार्थकम् ।

तृतीयाविभक्तेः विकारोऽर्थः । कण निमीलने इति धातोः कर्तरि घञि निष्पन्नं काणपदम् । तस्य च चाक्षुषप्रयोजकगोलकद्वयाभावान् तथाविधगोलकवानर्थः । तदर्थैकदेशे चाक्षुषप्रयोजकगोलकद्वयाभावे तृतीयार्थस्य विकारस्य प्रयोज्यत्व सम्बन्धेनान्वयः । तथा च गोलकविकारप्रयोज्यचाक्षुषप्रयोजकगोलकद्वयाभाववान् तथाविधगोलकवान् इत्यक्ष्णा काण इत्यत्र बोधः । गोलकस्य चाक्षुषप्रयोजकत्वं च चक्षुषः स्वच्छिद्रद्वारा सन्निर्कषसम्पादनेन बोध्यम् । “अक्षिकाणमस्य” इति प्रयोगो वर्तते । तादृशप्रयोगस्वारस्यात् चाक्षुषाप्रयोजकं गोलकं काणादस्य शक्योऽर्थः । तद्वान् अवयवी लक्ष्योऽर्थः । लक्ष्यतावच्छेदकं तु प्रागुक्तोभयधर्मवत्वम् । चाक्षुषप्रयोजकत्वं नाम चक्षुरिन्द्रियजन्य प्रत्यक्ष प्रयोजकत्वम्। अत्र प्रयोजकत्वं कीदृशं ग्राह्यम् , फलोपधायकत्वरूपं वा स्वरूपयोग्यत्वरूपं वा इति संशयः । निमीलितैकलोचने काणपदव्यवहारापत्तेः न फलोपधायत्वरूपं प्रयोजकत्वं गृहीतुं शक्येत । तत्र चक्षुरिन्द्रियजन्यप्रत्यक्षरूपफलाभावात् । स्वरूपयोग्यत्वस्य स्वीकारे पुष्पकादिना गोलकच्छिद्रमुद्रणे काणपदव्यवहारानापात्रं च स्यात् । पुष्पकापनये चाक्षुषसन्निकर्षयोः सत्त्वात् तत्र स्वरूपयोग्यत्वमस्त्येव। अतः चाक्षुषप्रयोजकत्वं नाम अविकृतगोलकवत्वं ग्राह्यम् । सपुष्पकगोलके अविकृतगोलकवत्वं नास्तीति तत्र काणपदव्यवहारे न हानिः । अथवा, प्रागुक्तोभयधर्मवत्वं लक्ष्यतावच्छेदकं मास्तु । किन्तु गोलकद्वयप्रयोज्य चाक्षुषाभावचाक्षुषोभयत्वमवच्छेदकतासम्बन्धेन काणपदस्य लक्ष्यतावच्छेदकम् । काणशरीरे अवच्छेदकतासम्बन्धेन चाक्षुषाभावोऽपि वर्तते, तथाविध चाक्षुषमपि वर्तते । एवमपि निमीलितैकलोचने अवच्छेदकता सम्बन्धेन चाक्षुषाभावस्य चाक्षुषस्य च सत्त्वात् पुनरपि तत्र काणपदव्यवहारापत्तिः । अतः अदृष्टाद्वारकप्रयत्नावरुद्धगोलकवदन्यत्वेन शरीरं विशेषणीयम् । तथा सत्यपि पूर्वं निमीलितैकलोचने पश्चात् गोलकविकारेण काणे संजाते काणपदव्यवहारानापत्तिः स्यात् । तत्र अदृष्टाद्वारकप्रयत्नावरुद्धगोलकवदन्यत्वस्याभावात् । अत्रोच्यते । आहारपरिणामादिना अवयवानामुपचयात् अपचयात् वा शरीरभेदस्य सत्त्वात् तत्रापि तादृशगोलकवदन्यत्वं सुधरमेव । एवमपि काणस्याविकृताक्षिनिमीलने तदन्यत्वं न सिद्ध्यतीति तत्र काणपदव्यवहारानापत्तिः स्यात् । अतः अदृष्टाद्वारकप्रयत्नावरुद्धगोलकवदन्यत्वं परित्यज्य अदृष्टाद्वारकप्रयत्नाप्रयोज्यत्वं चाक्षुषाभावे विशेषणं देयम् । काणीयचाक्षुषाभावः अदृष्टाद्वारकप्रयत्नोप्रयोज्यो न, किन्तु अदृष्टद्वारकप्रयत्नप्रयोज्य एव । अतः अविकृताक्षिनिमीलनकालेऽपि काणे काणपदव्यवहारो न विरुध्यते । एवमपि कुपथ्यभोजनादिना यत्र

पुष्पकाद्युत्पत्तिस्तत्र अदृष्टाद्वारकप्रयत्नाप्रयोज्यत्वं नास्तीति पुनरपि काणपदव्यवहारानापत्तिः । अतः गोलकविकाराप्रयोजकप्रयत्नाप्रयोज्य गोलकविकारप्रयोज्य गोलकद्वयप्रयोज्य चाक्षुषाभावचाक्षुषोभयवत्वमवच्छेदकता सम्बन्धेन काणपदस्य लक्ष्यतावच्छेदकं बोध्यम् । उभयघटक चाक्षुषत्वं च चक्षुरिन्द्रियजन्यप्रत्यक्षयोग्यत्वम् । योग्यत्वं च चक्षुर्निर्गमावरोधकशून्यछिद्रवत्वे सति चक्षुःसंयोगिगोलत्वं गोलके । तथाविध गोलकसमवेतत्वं शरीरे च बोध्यम् । तथा च गोलकविकारप्रयोज्यगोलकविकाराप्रयोजकप्रयत्नाप्रयोज्यगोलकद्वयप्रयोज्यचाक्षुषाभाववान् चक्षुर्निर्गमावरोधकशून्यछिद्रवच्चक्षुः संयोगिगोलकवान् काण इति अक्ष्णा काण इत्यत्र बोधः । विकाराश्च क्वचित् चक्षुर्नाशः, क्वचित् गोलकनाशः, क्वचित् पुष्पकादिश्च । काकनिष्ठः गोलकद्वयप्रयोज्यचाक्षुषाभावः शप्तप्रयोज्यः एव, न तु विकारप्रयोज्य इति तस्य काणव्यपदेशो नास्ति । नन्वेवं "ऐषीकमस्त्रमुदपास्यदुथैनमक्ष्णा काणीचकार चरमो रघुराजपुत्र" इति कथं मुरारिप्रयोग इति चेत् – उच्यते । अत्र तृतीयायाः ऐषीकास्त्रप्रयुक्तोपघातोऽर्थः । अन्यत् सर्वं पूर्ववत् । यदि शापस्यापि गोलकविकारप्रयोजकत्वमङ्गीक्रियते तर्हि शापोऽपि विकारो भवतु नाम । तथा सति "सर्वे काकाः काणा" इति व्यवहारःसम्भवति । अत एवाह कोशकारः – "काणः काकैकचक्षुषोः" इति । एवं "पादेन श्वञ्जः" "पाणिनाकुणिः" इत्यादिस्थलेष्वपि बोधो वर्णयितव्यः । यदि "पाणिभ्यां कुणिः" इति व्यवहारोऽङ्गीक्रियते तर्हि तत्र कुणिपदार्थः करद्वयप्रयोज्यकार्याभाववान् इत्येव । तदर्थैकदेशे करद्वयप्रयोज्यकार्याभावे तृतीयार्थस्यविकारस्य प्रयोज्यत्वसम्बन्धेन अन्वयः । अत एव "तान्यक्ष्णा बधिराणि पन्नगकुलान्यष्टौ" इति प्रयोग उपपद्यते । अत्र बधिर पदार्थः श्रवणप्रक्ष्यक्षाभाववान् पन्नगस्य श्रवणेन्द्रियं गोलकनिष्ठं भवति । तदवच्छिन्ने श्रोत्रे शब्दानुत्पाद एव गोलकस्य विकारः । बोधस्तु पूर्ववत् बोध्यः । एवं नासिकया अघ्राता, त्वचा अस्पृशकः, जिह्वया अरसयिता इत्यादिस्थलेष्वपि बोधाकारः ऊह्यः । एतावता अवयवानामपचयस्यैव विकारत्वमभिहितम् । "हानिवदाधिक्यमप्यङ्गानां विकारः" इति वामनसूत्रबलात् उपचयस्यापि विकारत्वं सम्भवति । अत एव "स बाल आसीत् वपुषा चतुर्भुज" इति माघप्रयोग उपपद्यते । यदि उपचयोऽर्थः विकारत्वेन नाङ्गीक्रियते तर्हि "वपुषा चतुर्भुज" इत्यत्र तृतीयायाः "प्रकृत्यादिभ्य उपसंख्यानम्" इति वार्तिकेन अभेदोऽर्थः स्वीकर्तुं शक्येत । वर्णेन लोहित इतिवत् । अत्र वपुःपदं पूर्वकायपरमिति बोध्यम् । अन्यथा अङ्गत्वाभावात् । एवमक्ष्णा काण इत्यादिस्थलेषु तृतीयाविभक्तेरर्थः किञ्चित् विहित इति शम् ।

###

# कुसुमाञ्जल्यां अनुपलब्धेः प्रमाणान्तरत्वनिरासवादः

विद्वान् का. इ. मधुसूदनः, त्रिचूर्

ईश्वरसद्भावे प्रत्यक्षादीनामबाधकत्वचिन्तनावसरे अनुपलब्धेः अबाधकत्वं निरूपितम् । प्रसङ्गात् तस्याः प्रमाणान्तरत्वमधुना निराक्रियते । अनुपलब्धिः प्रत्यक्षानुमानान्यतरान्तर्गता । अनुपलब्धिविशेषस्य प्रत्यक्षान्तर्भावः इत्थं साधितः –

प्रतिपत्तेरपारोक्ष्यात् इन्द्रियस्यानुपक्षयात् ।
अज्ञातकरणत्वाच्च भावावेशाच्च चेतसः ॥ इति ।

अपरोक्षरूपत्वम् , कार्यान्तरानुपक्षीणेन्द्रियसापेक्षत्वम् , अज्ञायमानकरणकत्वम् , मनस्सहकारिभाव-भूतकरणसापेक्षत्वमिति चतुर्भिः हेतुभिः अभावधीविशेषस्य इन्द्रियकरणकत्वं साध्यते रूपादि-प्रतीतिदृष्टान्तेन । ज्ञातानुपलब्धेः अनुमानेऽन्तर्भावः, ज्ञातकारणस्य परोक्षज्ञानजनकतायाः लिङ्गादौ क्लृप्तत्वात् । तस्याः परोक्षज्ञानजनकत्वमेवम् – मन्दिराच्चैत्रमानेतुमाज्ञप्तेन प्रेष्येण स्वामिने यत् वाक्यमुक्तम् – "निपुणतरमनुसृतो मया मन्दिरे चैत्रः, एवमपि नोपलब्धः" इति, तस्य श्रवणेन चैत्रस्य मन्दिरे योग्यानुपलब्धिं ज्ञात्वा स्वामी "प्रेष्यप्रवेशसमये मन्दिरे चैत्रो नासीदि"ति अनुमिनोति इति ।

तत्रानुपलब्धिविशेषस्य प्रत्यक्षान्तर्भावायोपन्यस्तेषु हेतुषु प्रथमः असिद्धः, विषये लौकिकविषयतापादकत्वरूपस्य साक्षात्कारित्वस्य अनुपलब्धिजन्यप्रतीतौ विरहात् इति यद्यपि शङ्का जायते, तथापि सा अज्ञातकरणकत्वेन अपरोक्षत्वसाधनोपपत्तेः निराकरणीया ।

न च तथापि द्वितीयहेतौ अन्यत्रानुपक्षीणत्वासिद्धिः, अधिकरणग्रहमात्रे इन्द्रियोपयोगादिति वाच्यम् । अन्धस्य घटे नीले रक्तरूपा भावप्रतीत्यापत्तेः । अभावस्य प्रतियोगिग्राहकेन्द्रियग्राह्यत्वमेव, न त्वधिकरणग्राहकेन्द्रियग्राह्यत्वम् । अतो नान्धस्य त्वचा रूपाभावग्रहणप्रसङ्गः । न च प्रतियोगिग्राहकेन्द्रियजन्याधिकरणग्रहणस्य अनुपलब्धिसहकारित्वस्वीकारान्नैष दोषः इति वाच्यम् । वायौ रूपाभावप्रत्यक्षानुपपत्तेः । प्रतियोगिग्राहकेन्द्रियसन्निकर्षस्यैव सहकारित्वे तु वायौ चक्षुः सन्निकर्षस्योपक्षीणत्वाभावेन रूपाभावे एव तदपेक्षायाः वक्तव्यतया अन्यत्रानुपक्षीणत्वसिद्धेः ।

न च सन्निकर्षस्य सम्भावितयत्किञ्चिद्वस्तुग्रहणे एव उपयोगः शङ्क्यः । वस्त्वन्तरग्रहस्य रूपाभावप्रतीत्यहेतुत्वात् । अनियतयत्किञ्चिद्वस्तुविषयकज्ञानस्य अभावप्रत्यक्षहेतुत्वे महान्धकारे करपरामर्शेन स्पर्शवद्द्रव्यस्य अभावप्रत्यक्षं न स्यात् । एवं पुरोविस्फारिताक्षः पश्चाद्देशे स्थितस्य घटादेः रूपविशेषाभावं गृह्णीयात् । चक्षुषा पुरतः यत्किञ्चिद्वस्तुदर्शनात् । न चाधिकरणस्य आर्जवावस्थानमपेक्षितमिति वाच्यम् । चक्षुः सन्निकर्षस्य अधिकरणग्रहेऽनुपयोगात् , अचाक्षुषेऽपि वायौ रूपाभावप्रतीत्युदयात् , प्रत्युत अभावग्रहे एवोपयोगात् ।अभावप्रत्यक्षे नयनसन्निकर्षस्याप्यवश्यमपेक्षा । आलोकसन्निकर्षस्य चक्षुः सन्निकर्षैकसहकारित्वात् तत्कारणकत्वे एतत्कारणकत्वमपि अवर्जनीयम् ।

यदि अनुपलब्धिसहकारित्वस्य अनुभवबलेन आलोकसन्निकर्षे स्वीकारात् तदेकसहकारित्वानुपपत्तिः इत्युच्येत, तर्हि रूपाभावप्रत्यक्षे चक्षुषा यत्किञ्चिद्वस्तुग्रहणं, अधिकरणस्य कथमपि ग्रहणं, आर्जवावस्थानं, आलोकसन्निकर्षश्च कारणानीत्यङ्गीकृतं भवेत् । तथा सति वातायनविवरेण करं प्रसार्य यदा कुड्यान्तरितं वातायनपरभागस्थं किमपि वस्तु त्वचा गृहीतं, तदा तत्र तद्गतरूपविशेषाभावप्रत्ययापत्तिः । अतः तत्र चक्षुः सन्निकर्षाभावादेव तदभावस्य वाच्यतया तस्य कारणत्वं सिद्धम् ।

एवं योग्यताविशिष्टानुपलब्धिरूपकारणघटकस्य प्रतियोगीतरप्रतियोगिग्राहकसामग्रीसाकल्यरूपस्य योग्यत्वस्य निर्वर्तने उपक्षीणं चक्षुः, चक्षुरधिकरणसन्निकर्षाभावे एककारणलोपात् योग्यतानुपपत्तेरित्यपि न, कारणसमुदायरूपस्य कारणसाकल्यस्य कारणानतिरिक्तत्वेन चक्षुषः स्वस्मिन् कारणान्तरे वा अनुपक्षीणत्वात् ।

ननु तदधिकरणकाभावप्रत्यक्षे तदधिकरणवृत्तिकिञ्चिद्वस्तुग्रहस्य अनुपलब्धेः सहकारित्वे वायौ रूपाभावप्रत्यक्षानुपपत्तिः तत्प्रतीतेरनुमितिरूपत्वस्वीकारेण वार्यते, वायुर्नीरूपः रूपवत्त्वेनानुपलभ्यमानत्वादिति चेत् , न । हेतोरसिद्धेः । न हि भवन्मते उपलम्भाभावः अनुपलब्धिप्रमाणाधीनोपलम्भकः, ज्ञानस्यातीन्द्रियत्वात् । नापि प्राकट्याभावानुमेयः, तस्यापि ग्राहकप्रमाणाभावेनासिद्धत्वात् । नापि व्यवहाराभावानुमेयः, उपेक्षास्थले कायिकवाचिकव्यवहाराभावेन व्यभिचारात् । न च उपेक्षातिरिक्तज्ञानाभावसाधनं साधीयः, मूकस्वप्ने व्यभिचारात् । ज्ञानस्य प्रत्यक्षत्वाङ्गीकारेण अनुपलब्धेः योग्यानुपलब्धिग्राह्यत्वसम्भवात् वायौ नीरूपत्वानुमानमित्यपि न सम्यक् । नैयायिकमतप्रवेशे अतीन्द्रियाकाशादिगतस्य शब्दध्वंसप्रागभावादेः प्रत्यक्षत्वस्थापनरीत्या वायौ रूपाभावप्रत्यक्षत्वस्यैव सिद्ध्यापत्तेः ।

किञ्च अभावप्रतीतौ प्रतियोगिग्राहकेन्द्रियेण अधिकरणधर्मप्रतीतिरनुपलब्धेः सहकारिणीत्युक्तमयुक्तम्। तत्र हि अधिकरणधर्मप्रतीतिः सहकारिकारणमिति किं तदभावे तदभावः इति व्यतिरेकमुखेन निश्चीयते, उत धर्मप्रतीतौ अभावप्रत्ययव्यापकत्वबलादिति वक्तव्यम् । नाद्यः कल्पः, तथा व्यतिरेकस्य अदृष्टत्वात् । नान्त्यः, तर्हि वायौ रूपाभावप्रत्ययस्य धर्मप्रतीत्याक्षेपकत्वापत्तेः, अभावप्रत्ययस्य तद्व्याप्यत्वात् । तस्मात् , अन्तरा धर्मप्रतीतिकल्पने गौरवाच्च अनन्यत्रोपक्षीणेन्द्रियसन्निकर्षानन्तरभावित्वरूपद्वितीयहेतुः निर्दुष्टः ।

अयमभावप्रत्ययः साक्षादिन्द्रियजन्यः ज्ञायमानावृत्तिकरणतानिरूपकत्वे सति ज्ञानत्वादिति तृतीयानुमानम् । लिङ्गज्ञानस्य करणत्वे ज्ञानावृत्तित्वं करणतायां निवेश्यम् । साक्षादिन्द्रियजन्यत्वं विषयेन्द्रियसन्निकर्षजन्यत्वरूपं विवक्षितम् । स्मरणं च दृष्टान्तः । न च तर्हि तस्यापि प्रत्यक्षत्वापत्तिरिति वाच्यम् । संस्कारातिरिक्तसन्निकर्षे सत्येव प्रत्यक्षरूपता । तदभावाच्च तस्याः न तथात्वम् इति । हेतौ ज्ञानत्वस्थाने अनुभवत्वनिवेशे च न कापि अनुपपत्तिः । न चैवं भावविषयकत्वविशिष्टाज्ञातकरणक–ज्ञानत्वमुपाधिरिति वाच्यम् । अनुकूलतर्काभावेन साध्योपाध्योः व्याप्तिभङ्गेन तस्यानुपाधित्वात् ।

एवमयमभावप्रत्ययः अनुपलब्धिव्यतिरिक्तक्लृप्तप्रमाणसापेक्षमनोजन्यः बाह्यार्थानुभवत्वात् , अभावविषयकानुभवत्वात् , घटाद्यनुभववत् , अभावानुमित्यादिवच्चेति प्रयोगोऽपि प्रत्यक्षत्वे सुकरः ।

अन्येऽपि चत्वारो हेतवः इन्द्रियाणामभावप्रत्यक्षजनकत्वे आचार्यैः दर्शिताः ।

प्रतियोगिनि सामर्थ्यात् व्यापाराव्यवधानतः ।
अक्षाश्रयत्वाद्दोषाणामिन्द्रियाणि विकल्पनात् ॥ इति ।

इन्द्रियाणि अभावप्रत्यक्षकरणम् प्रतियोगिग्राहकत्वात् , अधिकरणग्रहस्य मध्येऽपेक्षितत्वेऽपि तस्य व्यापारत्वेन व्यवधायकत्वाभावात् , अभावभ्रमहेतुदोषस्य इन्द्रियाश्रितत्वेन दुष्टस्य यस्य भ्रमकरणत्वं तस्य निर्दुष्टस्य प्रमाकरणत्वात् , अभावविशिष्टबुद्धिजनकत्वाच्चेति विवक्षितमिति सङ्क्षेपः ।

###

# कालाध्वनोः अत्यन्तसंयोगे इति सूत्रार्थविचारः

**विद्वान् के. विश्वनाथ शर्मा, तिरुपति**

सन्ति प्रयोगाः – मासं अधीते चैत्रः – क्रोशं गच्छति इत्यादयः । एषु प्रयोगेषु भवति विचारः कथं अत्र द्वितीयाविभक्तिः भवति ? इति । एवम् उत्पन्नायाः तस्याः अर्थः कः इति च ।

तत्र केचित् आचार्याः पूर्वोक्तस्थले "[1]कालाध्वनोः अत्यन्तसंयोगे" इति पाणिनीयसूत्रेण उपपादयन्ति । अनेन च सूत्रेण कालविशेषवाचकस्य अध्वमानवाचकस्य च पदस्य अत्यन्तसंयोगे अर्थे विवक्षिते द्वितीया भवति इति अभिधीयते ।

अन्ये तु अत्र प्राकृतं एव कर्मत्वम् उपपादयन्ति ।

तद्यथा – धात्वर्थतावच्छेदकफलशालित्वं धात्वर्थक्रियया आप्तुम् इष्यमाणत्वं वा कर्मत्वम् । तच्च प्रकृते वक्तुं शक्यते । धात्वर्थे व्यापनादिरूपस्य क्रियाविशेषस्य अन्तर्भावोपगमात् । तादृशव्यापनक्रियया इष्यमाणत्वात् आप्तुं मासादेः । तदुक्तं वाक्यपदीये –

[2]कालभावाध्वदेशानाम् अन्तर्भूतक्रियान्तरैः ।
सर्वैः अकर्मकैः योगे कर्मत्वम् उपजायते ॥ इति ।

स्यादेतत् धात्वर्थे व्यापनान्तर्भावे एवं वक्तुं शक्यम्– परन्तु तत्रैव प्रमाणं नास्ति इति चेत् ; उक्तं तत्रैव–

[3]एकदेशे समूहे वा व्यापाराणां पचादयः ।
स्वभावतः प्रवर्तन्ते तुल्यरूपसमन्विताः ॥ इति ।

धातवः कदाचित् स्वार्थैकदेशम् अभिदधति कदाचिच्च समूहात्मकम् एव स्वार्थम् । यथा देवदत्तः पचति इति स्थले अधिश्रयणाद्यधश्रयणान्तः व्यापारसमूहः, तण्डुलः पच्यते स्वयमेव इत्यत्र विक्लित्तिरूपः स्वार्थैकदेशः च बोधविषयः भवन् दृष्टः इति अस्यार्थः ।

---

[1] पाणिनीयं सूत्रम् – २/३/५

[2] वाक्यपदीयम् – ३/७/६७

[3] वाक्यपदीयम् – ३/७/५८

यद्यपि तत्र धातोः तादृशसमूहार्थशक्तत्वात् एकदेशार्थबोधकत्वं सम्भवदुक्तिकं प्रकृते तु मासं आस्ते इत्यत्र व्यापनस्य तद्विशिष्टस्य वा धात्वर्थत्वाभावात् कथं तत्र उक्तयुक्तेः अतिदेशःइति शङ्का भवेत् तथाऽपि बलाहकात् विद्योतते विद्युत् इत्यत्र यथा निस्स्सणस्य धात्वर्थे अन्तर्भावः तद्वत् प्रकृते अपि भवितुम् अर्हति इति समञ्जसम् ।

ननु एवं मासादिकर्मणः प्राकृतत्वोपपादने तेन कर्मणा सकर्मकत्वम् एव धातोः स्यात् । ततः तत्र भावेप्रत्ययाः न स्युः । तेषां अकर्मकधातुभिः योगे एव साधुत्वात् "[1]भावे च अकर्मकेभ्यः" इति सूत्रात् इति दोषः इति चेत् ।

उच्यते द्विविधं कर्म अन्तरङ्गलक्षणं बहिरङ्गलक्षणं च । तत्र अन्तरङ्गलक्षणं कर्म चैत्रःमासं ओदनं पचति इत्यत्र ओदनः तस्य प्रथमं क्रियया सह अन्वयात् । मासादि तु कर्म अन्तन्तरक्रियान्वयित्वात् बहिरङ्गलक्षणम् ।

अतः एव उक्तं वाक्यपदीये –

[2]आधारत्वम् इव प्राप्ताः ते पुनः द्रव्यकर्मसु ।
कालादयः भिन्नकक्ष्यं यान्ति कर्मत्वम् उत्तरम् ॥ इति ।

भिन्नकक्ष्यं बहिरङ्गं इत्यर्थः ।

[3]अतः तैः कर्मभिः धातुः युक्तोऽद्रव्यैः अकर्मकः ।
लस्य कर्मणि भावे च निमित्तत्वाय कल्पते ॥

इति । एवञ्च ईदृशीं व्यवस्थां आदाय यत् बहिरङ्गकर्म न तत् अकर्मकत्वव्याघातकं भवति इति कृत्वा सर्वे भावे प्रत्ययाः उपपद्यन्ते इति अस्य श्लोकस्य अर्थः । भाष्ये अपि एवम् एव उक्तं –

"[4]न च केचित् कालभावाध्वभिःअकर्मकाः । त एवं विज्ञास्यामः क्वचित् ये अकर्मकाः इति । अथवा येन कर्मणा सकर्मकाश्चाकर्मकाश्च भवन्ति, तेन अकर्मकाणां न चैतेन कर्मणा कश्चिदप्यकर्मकः । अथवा यत्कर्म भवति न च भवति तेन अकर्मकाणाम् । नचैतत् कर्म क्वचित् अपि न भवति " । इति ।

एवञ्च "मासं आस्ते" इत्यादि प्रयोगेषु प्राकृतं कर्मत्वम् उपपादयितुं शक्यम् इति स्थितम् । ।

---

[1] पाणिनीयं सूत्रम् – ३/४/६९

[2] वाक्यपदीयम् – ३/७/६८

[3] वाक्यपदीयम् – ३/७/६९

[4] व्याकरणमहाभाष्यम् – २/३/५

परन्तु यत्र क्रियापदं नास्ति तत्र क्रियाजन्यफलशालित्वादिरूपस्य कर्मत्वस्य वक्तुं अशक्यत्वात् तत्र मासं रमणीया क्रोशं कुटिला नदी इत्यादौ द्वितीया उक्तात् सूत्रादेव इति वक्तव्यं भवति ।

सूत्रोक्तः अत्यन्तसंयोगश्च यावदवयवसम्बन्धः । यत्समुदायः मासशब्दार्थः त एव मासावयवाः । दिनानां त्रिंशत् मासः । अतः दिनान्येव त्रिंशत् मासावयवाः । तत्सम्बन्धश्च त्रिंशत्वव्यापकत्वम् । ततश्च अत्यन्तसंयोगः नाम दिनपर्याप्तत्रिंशत्वव्यापकत्वरूपं मासं अधीते इत्यादिस्थले इति सिद्धम् । तादृशत्रिंशत्वादेः मासपदप्रवृत्तिनिमित्तस्य मासशब्दात् एव लाभेन व्यापकत्वमात्रं द्वितीयायाः अर्थः ।

तच्च व्यापकत्वं व्याप्यविशेषाघटितं अखण्डं दुर्वचं इति खण्डशः अभावप्रतियोगितावच्छेदकत्वं अभावश्च द्वितीयायाः अर्थः । प्रथमाभावे च प्रतियोगिवैयधिकरण्यम् विशेषणं दातव्यम् । प्रथमे तादृशे अभावे प्रकृत्यर्थस्य मासस्य आधेयतासम्बन्धेन अन्वयः। मासपदार्थान्विताभावप्रतियोगितावच्छेदकत्वस्य द्वितीयाभावे प्रतियोगितया अन्वयः । तस्य च धात्वर्थे अध्ययने स्वाश्रयचैत्रकर्तृकाध्ययनाधारता सम्बन्धेन अन्वयः । तस्य च प्रत्ययार्थकृतौ । तस्याः च कर्तरि । इति रीत्या मासनिष्ठाभावप्रतियोगितानवच्छेदकाध्ययनत्वविशिष्टानुकूलकृतिमान् चैत्रः इति शाब्दबोधः भवति ।

प्रतियोगिवैयधिकरण्यदानेन च मासपदार्थदिनावान्तरदण्डादौ अध्ययनाभावस्य सत्वे अपि मासम् अधीत इति प्रयोगस्य नानुपपत्तिः । तदभावस्य प्रतियोगिसमानाधिकरणत्वात् । मासपदार्थश्च त्रिंशतिः दिनान्येव न तु अखण्डं तावत्कालावस्थायि वस्तु । अन्यथा एकस्मिन्नेव दिने येन अधीतं तत्र विद्यमानस्य अध्ययनाभावस्य प्रतियोगिव्यधिकरणत्वाभावात् अग्रहणप्रसक्तौ व्यापकत्वस्य उक्तस्य प्रसक्त्या मासं अधीते इति प्रयोगापत्तिः । दिनान्येव मासः इत्युक्तौ च मासत्वाधिकरणे कस्मिंश्चित् दिने अध्ययनाभावस्य सत्वेन तस्य च प्रतियोगिव्यधिकरणत्वेन व्यापकत्वं नास्ति इति नापत्तिः ।

दिनं च तावत्कालावस्थायि अखण्डं वस्तु न तु क्रियाप्रचयः । तथासति एकैक क्रियाव्यक्तेरपि मासत्वाधिकरणत्वात् यत्र क्रियायाम् अध्ययनं नास्ति तत्र क्रियायां प्रतियोगिव्यधिकरणाध्ययनाभावस्य सत्वेन मासं अधीत इति प्रतोगस्य समीचीने अपि अनुपपत्तिः । अखण्डवस्तुपरत्वे तु नेयमापत्तिः । कालश्च पूर्वोक्तः सूर्योदयावधिः

सूर्योदयान्तरपर्यन्तः भवति ।

तस्य चायम् अनुगमः – सूर्योदयविशिष्टवस्तुत्वं दिनत्वम् । वैशिष्ट्यञ्च स्ववृत्तित्व – स्वपूर्वक्षणावृत्तित्व – स्वोत्तरसूर्योदयक्षणाव्यवहितपूर्वक्षणवृत्तित्व स्वोत्तरसूर्योदयक्षणावृत्तित्वैतच्चतुष्टयसम्बन्धेन । दिवसं स्वपिति इति स्थले तु एकक्षणमात्रस्वप्नकर्तर्यपि तादृशप्रयोगवारणाय अन्यादृशं दिनत्वं वक्तव्यम् । तच्च सूर्योदयविशिष्टक्षणकूटत्वम् । वैशिष्ट्यञ्च स्वपूर्वत्वशून्यत्व – स्वोत्तरसूर्योदयानुत्तरसूर्योदयपूर्वक्षणवृत्तित्वैतदुभयसम्बन्धेन । तथा च नानुपपत्तिः ।

अथवा अधिकरणता एव द्वितीयार्थः । तस्यां च चैत्रकर्तृकाध्ययनाधारतात्वव्याप्यधर्मावच्छिन्नावच्छिन्नत्वसम्बन्धेन मासपदार्थतावच्छेदक त्रिंशत्वादेः धर्मिपारतन्त्र्येण अन्वयः । ततश्च मासत्वसामान्यव्यापकत्वम् अध्ययने बाधितं इति शङ्कायाः अनुत्थितिः ।

इत्येवं परिष्कारेण मासं अधीते इत्यादीनां प्रयोगाणां द्वितीयायाश्च साधुत्वं सार्थकत्वं च उपपद्यते इति शम् ।

# युष्मदस्मत्पदार्थविचारः (शक्तिवादरीत्या)

**विद्वान् ए. श्यामसुन्दरभट्टः, श्रृङ्गगिरिः**

"अहं श्रुणोमि" "अहं गच्छामि" "चैत्र त्वमागच्छ" "त्वं पठ" इत्यादि प्रयोगानुरोधेन स्वोच्चारण-कर्तरि अस्मदः, स्वसम्बोध्ये च युष्मदः शक्तिस्वीकारे "देव्युवाच – मया त्वयि हतेऽत्रैव गर्जिष्यन्त्याशु देवताः" इति अनुवादक ऋष्याद्युच्चरितवाक्याद् अभीष्टो देवीकर्तृकमहिषासुर कर्मक घातादिबोधो न स्यात् तत्र देव्युच्चरितत्वस्य महिषासुरसम्बोध्यत्वस्य चाभावात् । योग्यताभ्रमघटित-सामग्रीवशाच्च ऋषिकर्तृक सुरथराजकर्मक हननविषयक – बोधस्यापत्तिश्च भवति, तत्र ऋषेस्तादृशवाक्यप्रयोक्तृत्वात् , राज्ञश्च तत्सम्बोध्यत्वात् इति चेत् ।

तादृशस्थले तादृशानुपूर्वीप्रकारेण सामन्यलक्षणप्रत्यासत्या देव्युच्चरितवाक्यस्यापि ज्ञानसम्भवाद् देवीमहिषासुरयोः "मया त्वयि" इत्यादिवाक्यप्रयोक्तृत्व – सम्बोध्यत्वस्मरणद्वारा पादार्थोपस्थितिघटित-सामग्रीवशात् देवीकर्तृकमहिषासुरकर्मकहननप्रतीतिरुपपद्यत एव । यदि तत्र वक्रनुवक्रुवाक्ययोरानुपूर्वी-विभिन्नैव भवति, तदा "ऋष्युच्चरितवाक्यं देव्युच्चरितवाक्यगतानुपूर्वीविशिष्टं न" इति विशेषदर्शने सत्यपि अनुवादकवाक्ये तादृशानुपूर्वीप्रकारेण देव्युच्चरितत्व भ्रमादेव तच्छ्रोतुः पुरुषस्य देव्यादि प्रतीतिर्जायत एव। यदि तत्र तादृशानुपूर्वीविशेषावच्छेदेनापि विशेषदर्शनं भवति तदा तत्र तादृशबोधो नेष्यत एव ।

नन्वेवं रीत्या अस्मद्पदघटितवाक्यात् देव्यादिप्रतीत्युपपादनेऽपि ऋष्यादिबोधस्यापि सम्भवेन पूर्वोक्तप्रतीत्यापत्तिर्दुर्वारैवेति चेत् न अन्यदीयस्वार्थतात्पर्यकोच्चारणानधीनोच्चारणरूपं स्वतन्त्रोच्चारण-मस्मत्पद प्रवृत्तिनिमित्तानुगमकं भवति । तादृशस्वतन्त्रोच्चारणकर्तर्येव अस्मत्पदस्य शक्तिः । तत्र ऋष्युच्चारणस्य च, देव्याः यत् स्वार्थतात्पर्यकोच्चारणं तदधीनत्वात् नास्मत्पदात् ऋष्यादिबोधापत्तिः । "अहं गच्छामि" इति स्वतन्त्रोच्चारणस्यापि "को गच्छति" इति प्रश्नवाक्याधीनतया तादृशस्वातन्त्र्यं न स्यात् अतः स्वार्थतात्पर्यकत्वमुच्चारणविशेषणम् । तत्र प्रश्नवाक्यस्य "अहं गच्छामि" इत्यादि प्रकृतवक्यार्थतात्पर्यकत्वाभावान्न स्वातन्त्र्यक्षतिः ।

आनुपूर्व्या सजातीयं यद् वाक्यान्तरं तदुच्चारणानधीनोच्चारणमेव स्वतन्त्रोच्चारणमित्युक्तौ तु, पूर्वोक्त-स्थले स्वातन्त्र्योपपत्तावपि, अर्थानुवादस्थलेऽनुवादकोच्चारणस्यापि स्वातन्त्र्यापत्तिर्दुर्वारैव । शब्दानुवाद-स्थले एव समानानुपूर्वीकवाक्योच्चारणापेक्षा नियमात् । वाक्यार्थानुवादस्थले तु समानार्थकवाक्य-मात्रोच्चारणापेक्षणात् ।

अन्यदीयस्वार्थतात्पर्यकेत्यादिकमपि अस्मत्पदप्रवृत्तिनिमित्तानुगमकं न भवितुमर्हति । तथा सति यत्र चैत्रेणान्यदीयात् "चैत्रः सुन्दरः" इति वाक्यादेव अर्थं प्रतीत्य "अहं सुन्दरः" इति वाक्यं प्रयुज्यते तत्र तदुच्चारणस्य अन्यदीयस्वार्थतात्पर्यकोच्चारणाधीनत्वादस्वातन्त्र्यप्रसङ्गः ।

एवं स्वपाण्डित्याभिमानिमौनिपुरुषज्ञानतात्पर्यकस्य "अयम् "अहं पण्डितः" इति जानाति" इत्यन्यदीयोच्चारणस्य स्वातन्त्र्यापत्तिश्च ।

अतः वाक्यान्तरस्थक्रियाकर्मतापन्नस्वघटितवाक्यार्थप्रत्यायनेच्छानधीनं स्वोच्चारणमेव स्वतन्त्रोच्चारणम् । तदेव चास्मत्पदप्रवृत्तिनिमित्तानुगमकम् । ऋष्याद्यनुवादस्थले च "देव्युवाच" इति वाक्यान्तरस्थोक्तिक्रियाकर्मतया अस्मत्पदार्थघटितवाक्यार्थं प्रतिपादयितुमस्मत्पदघटितवाक्यं प्रयुंक्ते इति न ऋषिवाक्योच्चारणस्य स्वातन्त्र्यापत्तिः । देवीवाक्योच्चारणस्य तु तादृशेच्छानधीनत्वात् स्वातन्त्र्यं सिद्ध्यति ।

पूर्वोक्तस्थले "अहं सुन्दरः" इति चैत्रोच्चारणस्यान्यदीय स्वार्थतात्पर्यकोच्चारणाधीनत्वेऽपि तादृशेच्छानधीनत्वात्स्वातन्त्र्यं सेत्स्यत्येव । एवं पूर्वोक्तस्य "अयम् "अहं पण्डित" इति जानाति" इत्यनुवादकवाक्योच्चारणस्य, "इति जानाति" इति वाक्यान्तरस्थज्ञानक्रियाकर्मतया "अहं पण्डितः" इति वाक्यार्थं प्रतिपादयितुमेव वक्ता अहंपदघटित वाक्यमुच्चारयतीति तादृशेच्छाधीनत्वेन स्वातन्त्र्यविरहात् न तत्रास्मत्पदात्तदुच्चारयितृपुरुषविषयकप्रतीतिः ।

"मां पश्य" इत्यादौ प्रकृतवाक्यस्थज्ञानरूपक्रियाकर्मतया स्वार्थं प्रतिपादयितुमेवास्मत्पदस्य प्रयोगात् तदुच्चारणस्य स्वातन्त्र्यनिर्वाहाय क्रियायां वाक्यान्तरस्थत्वनिवेशः ।

ननु मौनिपुरुषज्ञानतात्पर्यकोक्तवाक्योच्चारणस्थले अहं पदेन वक्तृप्रतीतिवारणेऽपि स्वपाण्डित्याभि-मौनिपुरुषप्रतीतिः कथमुपपादयितुं शक्यते । यतः तस्य मौनित्वेनोच्चारणाभावादस्मत्पदावाच्यत्वादिति चेत् सत्यम् सर्वत्रास्मत्पदस्य स्वतन्त्रोच्चारयितरि शक्तिश्चेदियमापत्तिः सम्भवति । तदेव न स्वतन्त्रोच्चारितास्मत्पदस्यैव तदुच्चारणकर्तरि शक्तिः । न तु अस्वतन्त्रोच्चारितास्मत्पदस्यातो नानुपपत्तिः । स्वतन्त्रोच्चारणरहितास्मत्पदस्य तु "स्वघटितवाक्यार्थकर्मकवाक्यान्तरस्थक्रियाकर्तर्यैव शक्तिः" । पूर्वोक्तस्थले अस्मत्पदघटित अहं पण्डितः इति वाक्यार्थ कर्मिका या वाक्यान्तरस्था क्रिया "इति जानाति" इत्यत्रविद्यमाना ज्ञानक्रिया तत्कर्ता मौनिपुरुषः इति तत्राभिमानिनः प्रत्यय उपपद्यते । एवं "मया त्वयि हतेऽत्रैव" इत्यादौ तादृशक्रिया "देव्युवाच" इतिवाक्यान्तरस्थोक्ति क्रिया तत्कर्तृत्वं देव्या इति पूर्वोक्तभ्रमं विनैव तत्रत्यास्मत्पदात् देवीविषयकबोधः शक्यते उपपादयितुम् ।

क्रियायां स्वघटितवाक्यार्थकर्मकवाक्यान्तरस्थत्वं च तादृशवक्यार्थकर्मकत्वेन वाक्यान्तरप्रतिपाद्यत्व-रूपम् , अतः "अहं पण्डित इति विद्वांसं पश्य" इत्यादौ दर्शनक्रियाया अस्मच्छब्दघटितवाक्यार्थ-विषयकत्वेऽपि तादृशवाक्यार्थकर्मकत्वेन रुपेण वाक्यान्तरप्रतिपाद्यत्वाभावात् तादृशज्ञानक्रियाकर्तुः नास्मत्पदशक्यत्वम् । स्वघटितवाक्यार्थविषयकत्वान्वितक्रियाकर्तृतया वाक्यान्तरप्रतिपाद्यत्वेन या वक्तृबुद्धिः तद्विषयतावच्छेदकत्वन्तु अस्मत्पदप्रवृत्तिनिमित्तानुगमकम् ।

युष्मत्पदस्य च स्वसम्बोध्यतावच्छेदकत्वोपलक्षितधर्मावच्छिन्ने शक्तिः । तत्र स्वसंबोध्यत्वं च वाक्यान्तरस्थक्रियाकर्मत्वेन स्वघटितवाक्यार्थानवगाहिनी या स्वजन्यप्रतीत्याश्रयत्वप्रकारकेच्छा तद्विषयत्वरूपम् । अतः अनुवादकसम्बोध्यस्य न युष्मत्पदार्थत्वापत्तिः । अनुवादस्थले च "देव्युवाच

मया त्वयि...” इत्यादौ ऋषिणा च “वाक्यान्तरस्थोक्तिक्रियाकर्मीभूतयुष्मत्पदघटितवाक्यार्थविषयक-स्वजन्यप्रतीत्याश्रयोभवतु सुरथः” इतीच्छयैव तादृशवाक्यप्रयोगात् , तत्र चेच्छायाः वाक्यान्तरस्थ-क्रियकर्मत्वेन स्वघटितवाक्यार्थावगाहित्वेन तदनवगाहित्वाभावान्न सुरथस्य तत्र युष्मत्पदार्थत्वापत्तिः ।

नन्वनुवादकोक्तवाक्यघटक युष्मत्पदात् सुरथबोधवारणेऽपि महिषासुरबोधः कथमुपपद्यताम् ? तत्र तत्सम्बोध्यत्वाभावात् इति चेत् , वाक्यान्तरस्थस्वघटितवाक्यार्थकर्मकक्रियाकर्मण्यपि युष्मत्पदस्य शक्त्यन्तरं स्वीक्रियते । तथा च “देव्युवाच” इति वाक्यान्तरस्था या देवीकर्तृकोक्तिक्रिया सा युष्मत्पदघटित “मया त्वयि” इत्यादि वाक्यार्थकर्मिका भवति । तत्कर्मत्वं च महिषासुरस्येति युष्मदस्तद्बोध उपपद्यत एव । स्वघटितवाक्यार्थविषयकत्वान्वित क्रिया कर्मतया वाक्यान्तरप्रतिपाद्यत्वेन या वक्तृबुद्धिः तद्विषयतावच्छेदकत्वं युष्मत्पदप्रवृत्तिनिमित्तानुगमकम् ।

ननु “अहमत्रास्मीति मैत्रो जानाति” इति चैत्रोच्चरित वाक्यस्यार्थद्वयं सम्भवति । एको “मैत्रः स्वस्थितिं जानाति” इति अपरश्च “मैत्रो मदीयां (चैत्रीयां) स्थितिं जानाति” इति । तत्र मैत्रस्य अस्मत्पदघटितवाक्यार्थकर्मकवाक्यान्तरस्थ ज्ञानक्रियाकर्तृत्वात् , अस्मदः तत्प्रतीतिरुपपद्यते । तत्र तात्पर्यसत्त्वे चैत्रोऽपि प्रतीयते । परन्तु तन्न स्यात् । चैत्रस्य तादृशक्रियाकर्तृत्वाभावात् , तदुच्चारणस्य च वाक्यान्तरस्थक्रियाकर्मतापन्नस्वघटितवाक्यार्थप्रत्यायनेनच्छानधीनत्वाभावाच्च ।

एवं “चैत्र त्वया भुक्तमिति मया श्रुतम्” इत्यत्र चैत्रस्य युष्मच्छब्देन प्रतिपादनं वर्तते । परन्तु चैत्रे वाक्यान्तरस्थ स्ववघटितवाक्यार्थकर्मक क्रियाकर्मत्वस्य, निरुक्तेच्छविषयत्वरूपस्वसम्बोध्यत्वस्य च विरहात् कथम् तत्प्रतीतिरुपपद्यते ? इति चेत् तर्हि स्वातन्त्र्यमुच्चारणविशेषणं सम्बोध्यत्वघटकेच्छायां पूर्वोक्तेच्छानधीनत्वविशेषणं च त्याज्यमेव । तथा च स्वोच्चारयितरि अस्मदः, स्वघटितवाक्यजन्य-प्रतीत्याश्रयत्वप्रकारकेच्छाविषयत्वरूपस्वसम्बोध्यत्ववति युष्मत्पदस्य च शक्तिरिति पर्यवस्यति । अनुवादस्थले चानुवादकतत्सम्बोध्ययोः “मया त्वयि” इत्यादितः प्रतीत्यापत्तिस्तु तत्पर्यविरहादेव वार्यते।

“त्वं स्थूलः” “अहं स्थूलः” इत्यत्र युष्मदस्मत्पदयोः मुख्यत्वमेव, न तु लाक्षणिकत्वम् । आत्मनि च स्थूलत्वस्य च बाधादत्र स्वसम्बोध्य–स्वोच्चारयितृशरीरावच्छिन्नात्मनोरेव युष्मदस्मदर्थत्वं स्वीकार्यम् ।

# सत्प्रतिपक्षसामान्यलक्षणम्

**विद्वान् मञ्जुनाथभट्टः, शृङ्गगिरिः**

पक्षतावच्छेदकविशिष्टपक्षग्रहत्वाव्यापकसाध्यतावच्छेदकविशिष्टसाध्यग्रहत्वाव्यापकपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपित साध्यतावच्छेदकधर्मसम्बन्धावच्छिन्नप्रकारताकानुमितित्वव्यापकप्रतिबध्यता-निरूपितप्रतिबन्धतावच्छेदिका सति पक्षतावच्छेदकविशिष्टपक्षग्रहत्वाव्यापकसाध्यतावच्छेदकविशिष्ट-साध्यग्रहत्वाव्यापकपक्षतावच्छेदकावच्छिन्न विशेष्यतानिरूपितसाध्यतावच्छेदकधर्मसम्बन्धावच्छिन्न-प्रकारताशाल्यनुमितित्वव्यापकप्रतिबध्यतानिरूपित प्रतिबन्धतावच्छेदकविषयित्वावच्छिन्नानुमितिनिष्ठ-जन्यतानिरूपितजनकतावच्छेदिका यद्रूपावच्छिन्ननिरूपकताकविषयिता तद्रूपावच्छिन्नत्वं सत्प्रतिपक्ष-सामान्यलक्षणम् ।

ह्रदो वह्निमान् धूमात् इत्यत्र वह्न्यभावव्याप्यवद् ह्रदे लक्षणसमन्वयः । यद्रूपावच्छिन्न–निरूपकताकविषयितापदेन वह्न्यभावव्याप्यवद् ह्रदत्वावच्छिन्ननिरूपकताकविषयितायाः ग्रहणे तस्यां विशेषणदलं वर्तते । यतः तत्र प्रतिबध्यतापदेन ह्रदे वह्निवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नप्रतिबध्यतायाः ग्रहणे तत्र ह्रदत्वविशिष्टह्रदग्रहत्वाव्यापकत्वं वर्तते । ह्रदो जलवान् इति ज्ञाने तादृशप्रतिबध्यतायाः अवृत्तित्वात् । एवं वह्नित्वविशिष्टवह्निग्रहत्वाव्यापकत्वं वर्तते । यतः पर्वतो वह्निमान् इति ज्ञाने तादृशप्रतिबध्यतायाः अवर्तमानत्वात् । एवं प्रकृतानुमितित्वव्यापकत्वं वर्तते यतः प्रकृतानुमितौ ह्रदो वह्निमान् इत्यत्र तादृशप्रतिबध्यतायाः वृत्तित्वात् । ह्रदे वह्निवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्न प्रतिबध्यतानिरूपिता या प्रतिबन्धकता ह्रदो वह्न्यभावव्याप्यवान् इति निश्चयनिष्ठा ह्रदे वह्न्यभावव्याप्य वैशिष्ट्यावगाहिनिश्चयत्वावच्छिन्नप्रतिबन्धकता तदवच्छेदकत्वं वह्न्यभावव्याप्यवद् ह्रदत्वावच्छिन्न-निरूपकताकविषयितायां वर्तते । एवं विशेष्यदलघटकप्रतिबध्यतापदेन ह्रदे वह्निवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नप्रतिबध्यतायाः ग्रहणे तत्र पूर्ववत् दलत्रयं वर्तते । तादृशप्रतिबध्यता-निरूपितप्रतिबन्धकता ह्रद वह्न्यभाववान् इति निश्चयनिष्ठा प्रतिबन्धकता ह्रदे वह्न्यभाववैशिष्ट्यावगाहि निश्चयत्वावच्छिन्नप्रतिबन्धकता तदवच्छेदकविषयिता वह्न्यभाववद् ह्रदविषयिता तदवच्छिन्नानुमितिनिष्ठा या जन्यता तन्निरूपिता या जनकता ह्रदो वह्न्यभावव्याप्यवान् इति निश्चयनिष्ठा तादृश-जनकतावच्छेदकत्वमपि वर्तते वह्न्यभावव्याप्यवद् ह्रदत्वावच्छिन्न विषयितायामिति यद्रूपावच्छिन्न-निरूपकताकविषयितापदेन वह्न्यभावव्याप्यवद् ह्रदत्वावच्छिन्न विषयितायाः, ग्रहणसंभवात् तद्रूपावच्छिन्नत्वं वह्न्यभावव्याप्यवद् ह्रदे सत्प्रतिपक्षे वर्तत इति समन्वयः । अत्र सत्यन्तदलानुपादाने सत्प्रतिपक्षोन्नायकेऽतिव्याप्तिः । यतः विशेष्यदलघटक दलत्रयाक्रान्तप्रतिबध्यता ह्रदो वह्निमान् इति ज्ञाननिष्ठा तन्निरूपितप्रतिबन्धकतावच्छेदकविषयिता वह्न्यभावव्याप्यवद् ह्रदविषयिता तदवच्छिन्न–जन्यतानिरूपित जनकता वह्न्यभावव्याप्यव्याप्यवान् ह्रदः इति निश्चयनिष्ठा जनकता तदवच्छेदकत्वस्य वह्न्यभावव्याप्यव्याप्यवद् ह्रदत्वावच्छिन्नविषयितायां सत्वात् सत्प्रतिपक्षोन्नायके वह्न्यभावव्याप्यव्याप्यवद्

ह्रदे अतिव्याप्तिः । अत्र सत्यन्तदलनिवेशः । तन्निवेशे तु दलत्रयाक्रान्तप्रतिबध्यतानिरूपित-प्रतिबन्धकत्वस्य ह्रदो वह्न्यभावव्याप्यव्याप्यवान् इति निश्चये विरहात् वह्न्यभावव्याप्यव्याप्यवद् ह्रदे नातिव्याप्तिः । अत्र विशेष्यदलानुपादाने वह्न्यभाववद् ह्रदे बाधे अतिव्याप्तिः । यतः सत्यन्तदलघटकदलत्रयाक्रान्तप्रतिबध्यता ह्रदो वह्निमान् इति ज्ञाननिष्ठा प्रतिबध्यता तन्निरूपित प्रतिबन्धकता ह्रदो वह्न्यभाववान् इति निश्चयनिष्ठा तदवच्छेदकत्वस्य वह्न्यभाववद् ह्रदविषयितायां सत्वात् बाधे वह्न्यभाववद् ह्रदे अतिव्याप्तिः । अतः विशेष्यदलनिवेशनम् । अत्र विशेष्यदलघटकदलद्वयाक्रान्त प्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयित्वावच्छिन्नानुमितिनिष्ठजन्यतानिरूपित जनकतावच्छेदकत्वस्य वह्न्यभाववद् ह्रदविषयितायां असत्वात् नातिव्याप्तिः ।

उभयत्र प्रतिबध्यतायां विशिष्टपक्षग्रहत्वाव्यापकत्वस्य अनुपादाने काञ्चनमयह्रदो वह्निमान् इत्यत्र काञ्चनमयत्वाभावव्याप्यवद् ह्रदे पक्षाप्रसिद्धौ अतिव्याप्तिः । यतः उभयत्र दलद्वयाक्रान्तप्रतिबध्यता ह्रदे काञ्चनमयत्ववैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नप्रतिबध्यता तन्निरूपितप्रतिबन्धकतावच्छेदकत्वस्य एवं तादृशप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयित्वावच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनकता-वच्छेदकत्वस्य च काञ्चनमयत्वाभावव्याप्यवद् ह्रदविषयितायां सत्वात् पक्षाप्रसिद्धौ अतिव्याप्तिः । तन्निवेशे तु गृहीतप्रतिबध्यतायां काञ्चनमयत्वविशिष्टग्रहविषयकत्वाव्यापकत्वस्य असत्वात् तादृशप्रतिबध्यतामादाय नातिव्याप्तिः । अत्र अतिव्याप्तिवारणाय सत्यन्तदलघटकप्रतिबध्यतायां अथवा विशेष्यदलघटकप्रतिबध्यतायां वा तत् निवेश्यताम् इति चेत् सत्यन्तदलघटकप्रतिबध्यतायां विशिष्टपक्षग्रहत्वाव्यापकत्वस्य अनिवेशे वह्न्यभावव्याप्यव्याप्याभाववान् ह्रदो वह्निमान् इत्यत्र आश्रयासिद्धौ वह्न्यभावव्याप्यव्याप्यवद् ह्रदे अतिव्याप्तिः । यतः अत्र दलद्वयाक्रान्तप्रतिबध्यता ह्रदे वह्न्यभावव्याप्यव्याप्याभाववैशिष्ट्यावगाहि बुद्धित्वावच्छिन्ना तन्निरूपिताप्रतिबन्धकतावच्छेदकत्वस्य एवं विशेष्यदलस्यापि वह्न्यभावव्याप्य व्याप्यवद् ह्रदविषयितायां सत्वात् अतिव्याप्तिः । तन्निवेशे तु उक्तप्रतिबध्यतायां विशिष्टपक्षग्रहत्वाव्यापकत्वस्य असत्वात् नातिव्याप्तिः ।

एवं उभयत्र प्रतिबध्यतायां विशिष्टसाध्यग्रहत्वाव्यापकत्वस्य अनुपादाने ह्रदः काञ्चनमयवह्निमान् इत्यत्र काञ्चनमयत्वाभावव्याप्यवद् वह्नौ साध्याप्रसिद्धौ अतिव्याप्तिः । यत्र दलद्वयाक्रान्तप्रतिबध्यता वह्नौ काञ्चनमयत्ववैशिष्ट्यावग्राहिबुद्धित्वावच्छिन्ना प्रतिबध्यता तन्निरूपित प्रतिबन्धकतावच्छेदकत्वस्य विशेष्यदलस्यापि काञ्चनमयत्वाभावव्याप्यवद् वह्निविषयितायां सत्वात् अतिव्याप्तिः । गृहीतप्रतिबध्यतायां विशिष्टसाध्यग्रहत्वाव्यापकत्वस्य विरहान्नातिव्याप्तिः । अत्र अतिव्याप्तिवारणाय एकत्रैव प्रतिबध्यतायां तद्विशेषणं निवेश्यतामिति चेत् सत्यन्तदलघटकप्रतिबध्यतायां विशिष्टसाध्य–ग्रहत्वाव्यापकत्वस्य अनिवेशे ह्रदः वह्न्यभावव्याप्यव्याप्याभाववद् ह्रदकालीनवह्निमान् इत्यत्र साध्याप्रसिद्धौ अतिव्याप्तिः । यतः तत्र प्रतिबध्यतापदेन ह्रदे वह्न्यभावव्याप्यव्याप्यभाव-वैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नायाः प्रतिबध्यतायाः ग्रहणे तन्निरूपितप्रतिबन्धकतावच्छेदकत्वस्य विशेष्यदलस्यापि वह्न्यभावव्याप्यव्याप्यवद् ह्रदे साध्याप्रसिद्धौ सत्वात् अतिव्याप्तिः । तन्निवेशे तु उक्तप्रतिबध्यतायां विशिष्टसाध्यग्रहत्वाव्यापकत्वस्य विरहात् नातिव्याप्तिः ।

उभयत्र प्रतिबध्यतायां व्यापकत्वान्तानिवेशे उदासीने घटाभावव्याप्यवद्भूतले अतिव्याप्तिः । तत्र दलद्वयाक्रान्तप्रतिबध्यता भूतले घटवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्ना इति उदासीने तत्र अतिव्याप्तिः । प्रकृतानुमितित्वव्यापकत्वस्य निवेशे तु तत्र प्रतिबध्यतायां तन्नास्ति इति नातिव्याप्तिः ।

सत्यन्तदलघटकप्रतिबध्यतायां तदनिवेशे सत्प्रतिपक्षोन्नायकेऽतिव्याप्तिः । यतः प्रतिबध्यतापदेन ह्रदे वह्न्यभावव्याप्यव्याप्याभाववैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नप्रतिबध्यताया ग्रहणसंभवात् अतिव्याप्तिः । तन्निवेशे तु तत्र प्रतिबध्यतायां तादृशव्यापकत्वस्य विरहान्नातिव्याप्तिः विशेष्यदलघटकप्रतिबध्यतायां विशिष्टपक्षग्रहत्वाव्यापकत्वस्य अनुपादाने वह्निमान् ह्रदो वह्न्यभावव्याप्यव्याप्याभाववान् इत्यत्र बाधे अतिव्याप्तिः बाधत्वादेव सत्यन्तदलमस्ति । तत्र दलद्वयाक्रान्तप्रतिबध्यता ह्रदे वह्निवैशिष्ट्यावगाहि-बुद्धित्वावच्छिन्ना तन्निरूपितप्रतिबन्धकतावच्छेदक विषयिता वह्न्यभावव्याप्यवद् ह्रदविषयिता तदवच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनकतावच्छेदकत्वस्य वह्न्यभावव्याप्यव्याप्यवद् ह्रदविषयितायां वर्तते इति तत्र बाधे अतिव्याप्तिः । तादृशविशेषणनिवेशे तु स्वीकृतप्रतिबध्यतायां विशिष्टपक्ष-ग्रहत्वाव्यापकत्वस्य असत्वात् नातिव्याप्तिः ।

तत्रैव प्रतिबध्यतायां विशिष्टसाध्यग्रहत्वाव्यापकत्वस्य अनुपादाने ह्रद वह्निमद् ह्रदकालीनवह्न्यभावव्याप्यव्याप्याभाववान् इत्यत्र बाधे अतिव्याप्तिः । तत्र दलद्वयाक्रान्तप्रतिबध्यता ह्रदे वह्निवैशिष्ट्यावगाहि बुद्धित्वावच्छिन्ना तन्निरूपितप्रतिबन्धकतावच्छेदकवह्न्यभावव्याप्यवद् ह्रदविषयित्वा-वच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनकतावच्छेदकत्वस्य बाधनिश्चयीयविषयितायां सत्वात् अतिव्याप्तिः। विशिष्टसाध्यग्रहत्वाव्यापकत्वस्य निवेशे तु तत्र प्रतिबध्यतायां तन्नास्तीति नातिव्याप्तिः । एवं तत्रैव प्रकृतानुमितित्वव्यापकत्वस्य अनिवेशे ह्रदःवह्न्यभावव्याप्यव्याप्याभाववान् इत्यत्र बाधे अतिव्याप्तिः । तत्र दलद्वयाक्रान्त प्रतिबध्यता ह्रदे वह्निवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्ना तन्निरूपित-प्रतिबन्धकतावच्छेदकविषयितावह्न्यभावव्याप्यवद् ह्रदविषयिता तदवच्छिन्नानुमितिनिष्ठजन्यतानिरूपित-जनकतावच्छेदकत्वस्य बाधनिश्चयीयविषयितायां सत्वात् अतिव्याप्तिः । उक्तप्रतिबध्यतायां प्रकृतानु-मितित्वव्यापकत्वस्य विरहात् नातिव्याप्तिः । सत्यन्तदलघटकप्रतिबन्धकतावच्छेदकत्वं प्रतिबन्धकता-नतिरिक्तवृत्तित्वरूपं बोध्यम् । अन्यथा ह्रदो वह्निमान् इत्यत्र वह्न्यभाववान् वह्न्यभावव्याप्यव्याप्यवान् इति निश्चयविशिष्टस्य वह्न्यभावव्याप्यव्याप्यवान् ह्रद इति निश्चयस्य प्रकृतानुमितिं प्रति प्रतिबन्धकत्वात् वह्न्यभावव्याप्यव्याप्यवद् ह्रदे अतिव्याप्तिः प्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकत्वस्य सत्वात् । तन्निवेशे तादृशप्रतिबन्धकताशून्ये वह्न्यभाववान् वह्न्यभावव्याप्यव्याप्यवान् इति निश्चयासमानकालीने वह्न्यभावव्याप्यव्याप्यवान् ह्रद इति निश्चये वह्न्यभावव्याप्यव्याप्यवद् ह्रद-विषयितायाः वृत्तित्वात् प्रतिबन्धकताशून्यावृत्तित्वरूपम् अनतिरिक्तवृत्तित्वं नास्ति इति नातिव्याप्तिः । एवं विशेष्यदलघटकजनकतावच्छेदकत्वमपि जनकतानिरूपितानतिरिक्तवृत्तित्वरूपं बोध्यम् । अन्यथा ह्रद महानसीयवह्निमान् इत्यत्र महानसीयवह्न्यभाववद् ह्रदे अतिव्याप्तिः । ह्रदे महानसीयवह्नि-वैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपित प्रतिबन्धकतावच्छेदकविषयिता महानसीयवह्न्य-भाववद् ह्रदविषयिता तदवच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनकता वह्न्यभाववान् महानसीय

वह्न्यभाववान् इति निश्चयविशिष्टनिष्ठा महानसीय वह्न्यभाववान् ह्रद इति निश्चयनिष्ठा जनकता तादृश-जनकतानिरूपित स्वरूपसम्बन्धरूपावच्छेदकत्वस्य महानसीयवह्न्यभाववद् ह्रदविषयितायां सत्वात् अतिव्याप्तिः । जनकतानतिरिक्तवृत्तित्वनिवेशे तु तादृशजनकताशून्ये वह्न्यभाववान् महानसीयवह्न्य-भाववान् इति निश्चयासमानकालीने महानसीयवह्न्यभाववान् ह्रद इति निश्चये महानसीयवह्न्यभाववद् ह्रद विषयितायाः वृत्तित्वात् जनकत्वाभाववदवृत्तित्वरूपं जनकतानतिरिक्तवृत्तित्वं नास्तीति नातिव्याप्तिः ।

एवं विशेष्यदलघटकप्रतिबन्धकतावच्छेदकत्वमपि प्रतिबन्धकतानतिरिक्तवृत्तित्वरूपं बोध्यम् । अन्यथा ह्रदः वह्न्यभावव्याप्यव्याप्याभाववान् इत्यत्र वह्न्यभावव्याप्यव्याप्यवद् ह्रदे बाधे अतिव्याप्तिः । यतः विशेष्यदलघटकप्रतिबध्यता ह्रदे वह्न्यभावव्याप्यव्याप्याभाववैशिष्ट्यावगाहिबुद्धित्वावच्छिन्ना तन्निरूपितप्रतिबन्धकता ह्रदः वह्न्यभावव्याप्यव्यापकवह्न्यभावव्याप्यव्याप्यसमानाधिकरण वह्न्य-भावव्याप्यवान् इति निश्चयनिष्ठा प्रतिबन्धकता तन्निरूपितस्वरूपसम्बन्धरूपावच्छेदकत्वस्य वह्न्यभावव्याप्यवद् ह्रद विषयितायां सत्वात् तदवच्छिन्नानुमितिनिष्ठजन्यतानिरूपित-जनकतावच्छेदकत्वस्य वह्न्यभावव्याप्यव्याप्यवद् ह्रदविषयितायां सत्वात् तत्र बाधे अतिव्याप्तिः । अतः प्रतिबन्धकतानतिरिक्तवृत्तित्वं निवेशितम् । तादृशप्रतिबन्धकताशून्ये वह्न्यभावव्याप्यवान् ह्रदः इति निश्चये वह्न्यभावव्याप्यवद् ह्रदविषयितायाः वृत्तित्वात् प्रतिबन्धकत्वाभाववद्वृत्तिरूपं प्रतिबन्धकतानतिरिक्तवृत्तित्वं नास्ति इति नातिव्याप्तिः ।

# लिङ्गक्रमसमाख्यानाधिकरणम्

**विद्वान् गणेशभट्टः, शृङ्गगिरिः**

भाट्टदीपिकायां तृतीयद्वितीयसप्तमाधिकरणे "लिङ्गक्रमसमाख्यानाक्राम्य युक्तं समाम्नानम्" इति सूत्राधिरूढत्वेन काम्येष्टिकाण्डपठितकाम्येष्टिक्रममनुसृत्य मन्त्रकाण्डे काम्ययाज्यानुवाक्याकाण्डमित्येवं समाख्याताः याज्यानुवाक्यामन्त्राः समाम्नाताः। तेषु मन्त्रेषु विचारः कृतः। तथा हि – काम्येष्टिकाण्डे "ऐन्द्राग्नमेकादशकपालं निर्वपे"द्यस्य सजातावीयुः इत्याद्या काम्येष्टयः समाम्नाताः तेनैव क्रमेण मन्त्रकाण्डे तत्तल्लिङ्गा एव काम्ययाज्यानुवक्याकाण्डमित्येवं समाख्याता "इन्द्राग्नी रोचना दिवः" इत्याद्या मन्त्रास्समाम्नाताः। तत्रायं संशयः । ते मन्त्राः लिङ्गमात्रात् इन्द्राग्न्यादिदैवत्यकर्ममात्राङ्गम् ? अथवा लिङ्गक्रमसमाख्यानुरोधेन कम्येष्टिमात्राङ्गम् ? इति । अस्य च धर्मविचाररूपत्वात् शास्त्रसङ्गतिः । श्रुत्यादिषट्प्रमाणकशेषत्वनिरूपणात् अध्यायसङ्गतिः । लिङ्गविनियोगोपयोगिविचारकरणात् तदुपजीवि प्रमाणान्तरविचाराच्च पादसङ्गतिः । पूर्वाधिकरणे श्रुतेः जघन्यप्रमाणापेक्षत्वे निरूपिते लिङ्गस्यापीह तन्निरूपणात् प्रासङ्गकी सङ्गतिः । तत्रायं पूर्वः पक्षः – एते मन्त्राः लिङ्गादिन्द्राग्न्यादिदेवत्यनित्यकाम्य कर्ममात्राङ्गम् । न तु दुर्बलक्रमसमाख्यानुरोधेन काम्येष्टिमात्राङ्गम् । सति चैवं सामान्य संबन्धबोधकप्रमाणाभावे लिङ्गमात्रेणान्यत्रविहित इन्द्राग्न्यादिकर्मसु मन्त्रविनियोगः नैव संभवति । स्वाध्यायविध्यध्यापितस्य मन्त्रजातस्य प्रयोजनाकांक्षत्वात् आकांक्षासहकृतेन योग्यतारूपलिङ्गेन मन्त्रस्य इन्द्राग्निप्रकाशनार्थत्वमुपपद्यत एव । अतः लिङ्गस्य न समान्यसंबन्धबोधकप्रमाणापेक्षा । अतश्च प्रकृते क्रमसमाख्याभ्यां नियतव्यवस्था न सिध्यति । लिङ्गं सामान्यतः क्रतुसंबन्धे अवगत एव विनियाजकम् इत्यत्र किञ्चिन्नियामकं नास्ति । पूर्वं क्रतुसंबन्धानवगमेऽपि आकांक्षासहकृतलिङ्गेन इन्द्राग्न्यादि देवताप्रकाशने मन्त्रस्य विनियोगः उपपद्यत एव । ननु देवतास्वरूपप्रकाशनस्य आनर्थक्यपरिहारार्थं अपूर्वीयदेवताप्रकाशनस्य प्रयोजनत्वस्य वक्तव्यतया अपूर्वीयप्रतीतेः क्रमसमाख्याभ्यां वक्तव्यतया न सर्वार्थत्वं मन्त्रस्येति आक्षेपे समाधानम् – यथा यूपाहवनीयजुह्वादिशब्दाः न लोकप्रसिद्धाः क्रतुमात्रप्रसिद्धाः तद्वदेव इन्द्राग्न्यादयोऽपि क्रतुमात्रप्रसिद्धाः, अतः तत्प्रकाशनेऽपि आनर्थक्याभावेन न अपूर्वीयत्वप्रतीत्यर्थं क्रमाद्यपेक्षा । किं च देवतात्वस्य यागैकनिरूपितत्वात् विहितत्वघटितत्वेन अलौकिकत्वात् अव्यभिचरितक्रतुसंबन्धस्य विद्यमानत्वात् अपूर्वसाधनत्वलक्षणा संभवत्येव । अथाऽपि देवतात्वस्य अलौकिकत्वेपि तेन रूपेण मन्त्रे अप्रकाशनात् अधिष्ठानमात्रस्य च इन्द्राग्न्यादेः मन्त्रार्थवादादौ यागं विना स्वर्गमेर्वादिस्थत्वेन प्रतिपादनात् लौकिकत्वावगतेः न अव्यभिचरितक्रतुसंबन्धित्वम् । इति शङ्कायां उत्तरमाह लौकिकस्य इन्द्राग्न्यादेः प्रकाशनस्य वैय्यर्थ्यादेव वारणं संभवत्येवं अतः परिशेषात् इन्द्रादिपदात् तद्धितेन क्रत्वाभिचारित्वे नैव देवतात्वप्रतीते स्मारकविधया क्रतूपस्थित्या अपूर्वसाधनत्वोपस्थितिः संगच्छत एव । एवं अपूर्वसाधनत्वोपस्थित्यर्थं सामान्यसंबन्धबोधकप्रमाण

सापेक्षत्वं लिङ्गे प्राचीनोपपादितं व्यर्थं सूचयित्वा मन्त्राणां आकांक्षोत्थापकत्वेन लिङ्गे सापेक्षत्वं दर्शयन् सिद्धान्तमाह ।

आकांक्षाभावे योग्यतामात्ररूपस्य लिङ्गस्य विनियोजकशब्दकल्पनं नैव युक्तम् , वहनयोग्यस्यापि पुरुषस्य आकांक्षायाः अभावे सति वहने विनियोगादर्शनात् । मन्त्रगतायाः प्रयोजन आकांक्षायाः विद्यमानत्वेन मन्त्रसहकृतलिङ्गेन विनियोगसिद्धिः नैव संभवति । वाचस्तोमादौ अर्थवृत्तिगुणप्रकाशनद्वारैव मन्त्राणां विनियोगसंभवे मन्त्राणां स्वतः निराकांक्षत्वात् । अतः मन्त्राणां आकांक्षा अभावात् लिङ्गमात्रात् मन्त्राणां सर्वयागार्थत्वं नैव उपपन्नम् । अतश्च वाक्यप्रकरणादिना सामान्यसंबन्धबोधकप्रमाणेन तत्तन्मन्त्रगत आकांक्षोत्थापनात् तत्तत्क्रतुसंबन्धे अवगते द्वारविशेष एव लिङ्गादवगम्यते तत्र प्रमाणान्तरं क्वचित् वाक्यं, यथा वषट्कारादिमन्त्राणां “एष वै सप्तदशः प्रजापतिर्यज्ञ अन्वायत्तः” इति, “बर्हिर्देवसदनं दामि” इत्यादिनां प्रकरणम् । प्रकृते क्रमसमाख्या च पूषानुमन्त्रण मन्त्रादावपि समाख्येत्युक्तम् । इदमेव सामान्यसंबन्धबोधकप्रमाणसापेक्षत्वं लिङ्गस्य । प्रकृतमन्त्रेषु आकांक्षोत्थापनेन काम्यकर्माङ्गत्वं नैव युक्तम् । प्रबलेन वाचस्तोमीयवाक्येन सामान्यसंबन्धबोधक प्रकरणादीनां बाधसंभवादिति न मन्त्रविशेषविषयाणां प्रकरणादीनां मन्त्रपाठकालोत्पन्नमन्त्रप्रयोजन आकांक्षावेलायां उपस्थितत्वात् तदा अनुपस्थितेन वाचस्तोमीयवाक्येन तेषां बाधायोगात् सति चैवं प्रबलेन प्रमाणेन विनियुक्तस्यापि आकांक्षोत्थापनेन विनियोगे दर्शपूर्णमासप्रकरणपठितपूषानुमन्त्रण मन्त्रस्य समाख्यासहकृतलिङ्गेन उत्कृष्टत्वेऽपि प्रकरणेन गौणार्थे विनियोगकल्पनं सङ्गतं भवेत् इति शङ्कायां समाधानं प्रमाणद्वयस्य एकविषयत्वात् लिङ्गस्य प्रकरणस्य च पूषानुमन्त्रणमन्त्ररूप एकविषयत्वात् मन्त्रप्रयोजनाकांक्षवेलायां प्रबलप्रमाणस्य उपस्थितत्वात् लिङ्गस्य प्रकरणबाधकत्वं उपपद्यत एव । अतश्च प्रकृते क्रमसमरख्ययोर्बाधायोगात् क्रमसमाख्यानुरोधेन काम्येष्टिविषयत्वमेव मन्त्राणाम् । सति चैव काम्येष्टिव्यतिरिक्तकर्मणि आकांक्षोत्थापकं न किञ्चिदपि अस्ति । अव्यभिचरितक्रतु संबन्धस्य आकांक्षोत्थापकत्वे प्रमाणाभावात् । प्रकरणपाठादौ हि एतत् प्रकरणपठितेन मया कथमस्योपकर्तव्यमिति जायते अपेक्षा । न तु अव्यभिचरितक्रतुसंबन्धेऽपि व्याप्तेर्बोधकत्वं नैयत्वेऽपि आकांक्षोत्थापकत्वा असंभावात् । वस्तुतस्तु देवतारूपस्य अग्न्यादिशब्दस्य अव्यभिचारोऽपि नास्ति जुह्वादीनां तु जुहूत्वेन रूपेण अन्यत्र कारणता नास्तीत्यतः क्रतुना अव्यभिचरितः संबन्धः युक्त एव । जुहू शब्दस्य क्रतुं प्रति कारणत्वेऽपि आकारविशेषविशिष्टस्यैव नियमेन कारणत्वम् । देवतारूपस्य अग्न्यादिशब्दस्य तु अनुपूर्वीविशिष्टवर्णरूपत्वेन क्रतुं प्रतीवस्वार्थप्रतिपादनं प्रत्यपि कारणत्वात् न तत्र अव्यभिचरितक्रतुसंबन्धः । यदि तु देवतारूप अग्न्यादिशब्दस्य स्वार्थप्रतिपादनं प्रति अकारणत्वे अर्थप्रतिपादकत्वाभावेन तस्य प्रातिपदिकसंज्ञा अनुपपत्तिः । जुहूशब्दस्य अर्थप्रतिपादनं प्रति करणत्वेऽपि क्रतुं प्रति आकारविशेषविशिष्टस्यैव नियमेन कारणत्वमिति वैषम्यम् । अतश्च देवतारूपस्य अग्न्यादि शब्दस्य व्यभिचारात् अव्यभिचारेऽपि वा आकांक्षोत्थापकत्वानुपपत्तेः प्रकृत इन्द्राग्न्यादिबोधक-याज्यानुवाक्यामन्त्रस्य काम्येष्टिव्यतिरिक्तकर्मणि विनियोगः नैव संभवति ।

अत एव यत्र अध्ययनविधिसिद्ध अर्थज्ञानस्य उपनिषज्जन्यजीवात्मज्ञानस्य वा स्वत एव साकांक्षस्य न आकांक्षोत्थापकप्रमाणापेक्षा तत्र आकांक्षोत्थापनप्रयोजनाभावात् सामान्यसंबन्धबोधकप्रमाणं विनाऽपि भवत्येव तत्र लिङ्गमात्रात् क्रतुषु विनियोगः । प्रकृते तु सामान्यसंबन्धबोधकप्रमाणं विना लिङ्गमात्रेण विनियोगायोगात् क्रमसमाख्यानुरोधेन मन्त्राणां काम्येष्टिविषयत्वमेव । एवं समाख्यापेक्षया प्रबल क्रमप्रमाणे नैव मन्त्राणां काम्येष्ट्यङ्गत्वोपपत्तेः याज्यानुवाक्याकाण्डमिति समाख्यावैयर्थ्यम् । सूत्रे च तदुपादानं व्यर्थमिति नैव संभवति सामिधेन्यङ्गभूतसाप्तदश्यं यस्मिन् कर्मणि अग्निदेवत्ये पाथिकृतीयेष्टिरूपे आतिदेशिकमन्त्रप्राप्त्या न प्रधाने याज्यापेक्षा ततश्च प्रकृते वाचनिकसाप्तदश्यविधानात् सामधेनीषु आग्नेय ऋग्द्वयापेक्षा तत्र क्रमाम्नात आग्नेयमन्त्रद्वयस्य प्रथमातिक्रमणे कारणाभावेन सामिधेनीषु क्रमाविरोधेन च निवेशप्रसक्तौ याज्याकार्ये तन्निवेशस्य समाख्ययेव वक्तव्यत्वात् समाख्यावश्यकत्वम् । न हि समाख्यया क्रमस्य बाधः संकोचो वा तस्य क्रमस्य याज्यादिकार्यनिवेशेऽपि अविरोधात् । एवं तर्हि काम्य याज्यानुवाक्याकाण्डमित्येव समाख्ययैव इष्टसिध्युपपत्ते कुत्रचिदपि क्रमस्य असाधारण्येन न सामान्यसंबन्धबोधकत्वमिति नैव वक्तुं शक्यम् आग्निवारुणेष्टिक्रमे तद्देवत्ययाज्यानुवाक्ये पठित्वा सोमारौद्रेष्टिक्रमाम्नाततत्तद्देवत्ययाज्यानुवाकया पाठात् पूर्वं आग्नेय्य ऋचः समाम्नाताः तत्र तासां लिङ्गविनियुक्तमन्त्रेण बाधात् उत्तरेष्टियाज्याकार्ये समाख्यामात्रेण विनियोगानुपपत्ते लिङ्गसहकृत समाख्यया अन्यत्र विनियोगप्रसक्तौ क्रमेण तां बाधित्वा उत्तरेष्टिसामिधेनीनिवेशलाभाय क्रमोपादानम् । सूत्रार्थस्तु लिङ्गानुग्राहकात् क्रमात् समाख्यानाच्च काम्येष्टिष्वेवाङ्गतया संयुक्तम् “उभावामिन्द्राग्नी” इत्यादिमन्त्रकाण्डसमाम्नानम् ।

# अपूर्वाधिकरणम्

**विद्वान् सुब्राय वि.भट्टः, शृङ्गगिरिः**

भगवता जैमिनिना प्रणीते पूर्वतन्त्रे द्वादशलक्षण्यां द्वितीयाध्याये प्रथमपादे तृतियम् अपूर्वाधिकरणम् । सिद्धान्तबोधकम् एकसूत्रघटितमिदमधिकरणम् । तच्च – "चोदना पुनरारम्भः" इति ।

अत्र "सोमेन यजेत" "सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः" "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्यादिवाक्यानि विषयीकृत्य विचारः प्रवृत्तः ।

अत्र सङ्गतिस्तु – प्रथमाध्याये धर्मप्रमाणानि निरूपितानि । द्वितीये चाध्याये प्रमेयभूतं धर्मस्वरूपं निरूप्यते । यद्यपि धर्मप्रमाणेषु उक्तेषु एतत्प्रमाणप्रतिपाद्यो धर्मः इति सामान्यतः धर्मस्वरूपमवगम्यते । तथापि धर्मस्वरूपस्य विशेषतः अवगमनार्थं तद्गतानेकत्वरूपो भेदो निरूप्यते । अतश्च उत्सर्गापवादाभ्यां भेदः अध्यायार्थः । तत्रापि प्राधान्येन भावनाभेदो निरूप्यते । अपूर्वभेदस्तु भावनाभेदानुनिष्पादितया । अतश्च धात्वर्थभेदापूर्वभेदयोः भावनाभेदसिध्यर्थत्वाद्भावनाभेदस्य प्राधान्यम् । तथा च – शब्दान्तरादिभिः षड्भिः प्रमाणैः प्राधान्येन भावनाभेदोऽत्र निरूप्यत इति शब्दान्तरादिषट्प्रमाणकं भावनाभेदनिरूपणम् अध्यायार्थः ।

धर्मप्रमाणनिरूपणानन्तरं कर्मभेदनिरूपणे तु अवसरसङ्गतिः । यथा – जिज्ञासासूत्रे "अथातो धर्मजिज्ञासा" इति धर्मस्वरूपजिज्ञासैव प्रथमतः प्रतिज्ञाता । तद्विवरणपरे भाष्येऽपि को धर्मः ? किं लक्षणकः इति प्रमाणजिज्ञासायाः पूर्वं स्वरूपजिज्ञासैव प्रतिज्ञाता इति धर्मस्वरूपनिरूपणम् आदौ कर्तुं उचितम् । न प्रमाणनिरूपणम् । तथापि "मानाधीना मेयसिद्धिरिति" न्यायेन चोदनासूत्रे प्रमाणान्तर्भावेणैव स्वरूपनिरूपणं कर्तुं योग्यमपि स्वरूपनिरूपणं विहाय समग्रे अध्याये प्रमाणचिन्ता कृता ।

"यदर्थं च यदारब्धं तत्समाप्तौ तद्बुद्धिस्थं जयत" इति न्यायेन प्रमाणचिन्तासमाप्तौ बुद्धिस्थस्य स्वरूपस्य अवसरलाभ इति प्रमाणनिरूपणानन्तरं भेदनिरूपणे अवसरसङ्गतिः ।

एवं पादसङ्गतिस्तु – अपूर्वभेदोपयोगिचिन्तनं पादार्थः । अध्यायार्थभूतभावनाभेदफलकत्वात् अपूर्वभेदस्य तदपूर्वभेदोपयोगि चिन्तनात्मकस्य अस्य पादस्य अस्मिन्नध्याये सङ्गतत्वम् ।

अधिकरणसङ्गतिस्तु – आक्षेपिकी । एकस्यैव फलसम्बन्धः न तु सर्वेषां उपपदार्थादीनामिति प्रतिपदाधिकरणे सिद्धान्तिते ततः भावार्थाधिकरणे – यदा एकस्यैव फलसम्बन्धः तदा उपपदार्थस्य उत धात्वर्थस्य इति सन्दिह्य फलभावनायां समानपदश्रुत्या धात्वर्थस्यैव करणत्वम् । पार्ष्ठिकान्वयलभ्य फलसम्बन्धोऽपि तस्यैव । ततश्च फलसम्बन्धनिर्वाहार्थं कल्प्यमानमपूर्वमपि धात्वर्थादेवेति सिद्धान्तितम्। तथा च अपूर्वमस्तीति सिद्धंकृत्वा तज्जनकं विचारितम् । अत्र च पूर्वाधिकरणे अपूर्वकल्पनायां प्रमाणाभावात् अपूर्वमेव नास्तीति तत्सद्भावमेव आक्षिप्य पूर्वपक्षः क्रियत इति आक्षेपिकी सङ्गतिः ।

**अत्र संशयः** – किं नास्त्यपूर्वम् उत अस्तीति ? कुतः संशयः इति चेत् – अपूर्वसद्भावे किमपि प्रमाणं नास्तीति प्रमाणाभावात् अपूर्वं नास्तीति प्रतीयते । एवं – यागफलयोः साध्यसाधनभावः वेदवाक्येन श्रुतः । स च साध्यसाधनभावः अपूर्वमन्तरा न संभवतीति – अन्यथानुपपत्या अपूर्वमस्तीति प्रतीयते । अतश्च पूर्वोत्तरपक्षयुक्तीनां बलाबलानिर्णयात् संशयः ।

**अत्रायं पूर्वपक्षः** – तत्र प्रमाणाभावात् न अपूर्वमस्ति । तथा हि – न तावदत्र प्रत्यक्षादिकं प्रवर्तते । यागस्वर्गसाध्यसाधनभावे यथा प्रत्यक्षं न प्रवर्तते तथा अपूर्वेऽपि न तत्प्रवर्तते । अपूर्वसद्भावबोधकं न किञ्चिच्छ्रुतिवचनं श्रूयते । अन्यथानुपपत्तिः तत्कल्पिका इत्यपि वक्तुं न शक्यते । अन्यथा क्षणिकयागस्य कालान्तरभावि स्वर्गसाधनत्वं नोपपद्यत इति प्रमाणान्तराभावेऽपि श्रुतार्थापत्तिरेव अपूर्वसद्भावे प्रमाणमिति वक्तुं न शक्यते । यतः साध्यसाधनभावस्य अन्यथानुपपत्तावपि अपूर्वस्य तदुपपादकत्वाभावात् कल्पना नोपपद्यते ।

अपूर्वस्य शक्तिरूपत्वम् अवान्तरव्यापाररूपत्वं वा कल्प्यते चेत् शक्तिव्यापारयोः शक्तिमद्व्यापारवन्निष्ठत्वनियमेन शक्तिमति व्यापारवति च यागे नष्टे शक्तिव्यापारयोः अवस्थानं नोपपद्यते।

गुरुभूतापूर्वकल्पनां विनापि यागस्वर्गयोः साध्यसाधनभावः उपपद्यत इति अपूर्वकल्पनायां प्रमाणं नास्ति ।

यथा – क्षणिको यागः साक्षात्कालान्तरभावि स्वर्गजननाय असमर्थः । तथापि स्वजन्यध्वंसद्वारा संभवति । ध्वंसस्य च यागजन्यत्वसद्भावयोः क्लृप्तत्वात्फलजनकत्वमात्रं कल्प्यमिति अवान्तरव्यापारत्वं सुलभम् । अपूर्वस्य तु सद्भावः, तस्य स्थायित्वम् , यागजन्यत्वम् स्वर्गजनकत्वं च इत्यनेकपदार्थ-कल्पनाद्गौरवम् ।

यागनाशानन्तरमेव द्वारकल्पनेन अभावस्य उपस्थितत्वाच्च ।

नन्वेवं ध्वंसस्यैव व्यापारत्वे तस्य नित्यत्वेन कीर्तनप्रायश्चित्तादिना नाशो न स्यात् । "धर्मः क्षरति कीर्तनात्" "प्रायश्चित्तेन नश्यन्ति पापानि सुमहान्त्यपि" इत्यादिशास्त्रविरोधः । अतः किर्तन-प्रायश्चित्तादिनाश्यं यागादिजन्यमपूर्वमावश्यकमिति चेत् क्लृप्तध्वंसस्यैव व्यापारत्वे अवधारिते कीर्तनादीनां फलोत्पत्तिप्रतिबन्धकमात्रं कल्प्यते ।

कीर्तनादिध्वंसस्य प्रतिबन्धकत्वकल्पने प्रयोगान्तरजन्यस्यापि फलस प्रतिबन्धकत्वं स्यात् । अतः तद्यागव्यक्तिकीर्तनजन्यध्वंसस्य तद्यागव्यक्तिजन्यफलप्रतिबन्धकत्वकल्पनात् गौरवमापद्यते । फलमुखगौरवस्य अदोषत्वात् । अथवा – कीर्तनध्वंसस्य न प्रतिबन्धकत्वं कल्प्यते । किन्तु कीर्तनात्यन्ताभावविशिष्टज्योतिष्टोमादिव्यक्तित्वेन करणत्वं कल्प्यत इति कीर्तनस्थले न यागध्वंसमात्रात्फलसिद्धिः । अन्यथा एकव्यक्तिकीर्तने व्यक्त्यन्तरेभ्योऽपि फलनिष्पत्तिप्रसङ्गात् । अतः युक्तम् ध्वंसस्यैव व्यापारत्वं न तु अक्लृप्तस्य अपूर्वस्य ।

एवं च "तृप्त एवैनमिन्द्रः प्रजया पशुभिश्च तर्पयति" इत्यर्थवादबोधितस्य देवताप्रसादस्य रात्रिसत्रन्यायेन द्वारत्वं परिकल्प्य देवताप्रसादस्यैव फलजनकत्वमित्यपि वक्तुं न शक्यते । उपस्थितेन ध्वंसेनैव द्वारत्वे सिद्धे रात्रिसत्रन्यायस्यानवकाशः । देवताप्रसादस्यापि इच्छाविशेषरूपस्य क्षणिकत्वेन व्यापारान्तरापेक्षणाच्च । तत्र च ध्वंसद्वारकत्वाङ्गीकारे तस्य च देवताप्रसादस्य अन्तर्गडुत्त्वापत्तेः यागध्वंसस्यैव व्यापारत्वमुचितम् ।

एवं तर्हि ध्वंसस्याभावरूपत्वात् कथं फलजनकत्वमिति चेत् – अभावस्यापि कारणत्वाङ्गीकारे बाधकं नास्ति । एवं घटाद्यभावरूपायाः अनुपलब्धेः एव घटाद्यभावग्राहकत्वमङ्गीकृतम् । एवं सन्ध्यावन्दनाद्यभावस्य प्रत्यवायजनकत्वम् । तस्मात् सर्वथा नास्त्यपूर्वमिति पूर्वपक्षिणामभिप्रायः ।

अत्र सिद्धान्तस्तु – प्रमाणसद्भावात् सर्वथा अपूर्वमस्ति । तथा हि – फलं तावत् प्रधानकालात्कालान्तरभावीति निर्विवादम् । आमुष्मिकफलानां स्वर्गादीनां जन्मान्तरे एव उपयोगः । ऐहिकानां वृष्टिपश्वादीनामपि न प्रधानानुष्ठानसमनन्तरमुत्पत्तिः ।

अतश्च कालान्तरभावि फलोत्पत्तिः क्षणिकात्कर्मणः व्यापारमन्तरेण न संभवति । व्यापारापेक्षायां यागध्वंसस्य व्यापारत्वं न संभवति । स एव हि व्यापारः कल्पनीयः यः श्रुताविरोधी स्यात् । यथा – "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्यादिना स्वर्गाख्ये फले श्रुते तस्य इह जन्मन्यसम्भवेन जन्मान्तरीयत्वं कल्प्यते । तद्वदिहापि "धर्मः क्षरति कीर्तनात्" "प्रायश्चित्तेन नश्यन्ति पापानि सुमहान्त्यपि" इत्यादिना कीर्तनप्रायश्चित्तादिना नाशकत्वश्रवणात् नाशार्हं किञ्चिदवश्यं कल्पनीयम् । स च यागो वा तध्वंसो वा न संभवति ।

नाशशब्दस्य फलोत्पत्तिप्रतिबन्धकत्वं स्वीक्रियते चेत् लक्षणया वक्तव्यम् । तत्र लक्षणायां प्रमाणं नोपलभ्यते । अतश्च क्लृप्तध्वंसद्वारकत्वकल्पनापेक्षया अपूर्वकल्पनस्य गुरुभूतत्वेऽपि तस्य फलमुखत्वात् अवश्यं प्रायश्चित्तादिना नाश्यमपूर्वमेव कल्प्यम् । यथा – निषादस्थपत्यधिकरणे लक्षणापादकतत्पुरुषसमासं विहाय श्रौत कर्मधारयसमासमङ्गीकृत्य विद्यादिकमाक्षिप्तं तत्तु फलमुखत्वादङ्गीकृतम् । तथैवात्रापि नाशपदस्य श्रौतार्थलिप्सया अपूर्वमङ्गीकर्तव्यम् ।

कीर्तनात्यन्ताभावविशिष्टज्योतिष्टोमव्यक्तित्वेन कारणत्वाङ्गीकारे गौरवम् । अनेककार्यकारणभाव-कल्पनापत्तिश्च ।

अपूर्वकल्पनापक्षे तत्कीर्तनत्वेन तद्व्यक्तिजन्यापूर्वनाशत्वेन कार्यकारणभावानेकत्वेऽपि कारण-तावच्छेदके गौरवं नास्ति । "धर्मः क्षरति कीर्तनात्" इति शास्त्रोन्नीतत्वेन प्रामाणिकत्वाच्च न दोषः।

किञ्च ध्वंसस्य प्रधानव्यापारत्वे तुल्यन्यायेन अङ्गेष्वपि स एव व्यापारोऽङ्गीकर्तव्यः । तस्य च नित्यत्वेन विकृतिप्रयोगवेलायामपि सत्वात् विकृतीनां पशुपुरोडाशवत् प्रसङ्गसिध्युपपत्तेः प्रयोगभेदेऽपि तज्जन्यस्य उपकारस्य लब्धत्वात् न पृथगङ्गानि कर्तव्यानि स्युः । तथा च विकृतौ "प्रयाजे प्रयाजे कृष्णलं जुहोति" इति दर्शनानुपपत्तिः ।

अपूर्वाङ्गीकारपक्षे अङ्गापूर्वाणां प्रधानापूर्वोत्पत्त्यनन्तरं नाशात् विकृत्यपूर्वसिध्यर्थं पुनः अङ्गानुष्ठानापत्तिः । अपि च अस्मिन्पक्षे अङ्गानां कुत्र उपयोग इति विचारे न तावत् प्रधाने, तस्य प्रयाजाद्यङ्गैः अजन्यत्वात् । नापि प्रधानध्वंसे अङ्गं विनापि प्रधानध्वंसस्य जायमानत्वात् । नापि फले – प्रधानत्वापत्तेः । अतः अङ्गप्रधानव्यवस्थासिध्यर्थं अवश्यं अपूर्वं कल्पनीयम् । अङ्गापूर्वाणां तु प्रधानोपकारकत्वेन चारितार्थ्यम् । तस्मात् यागस्य ध्वंसातिरिक्तो व्यापारो वाच्यः ।

तर्हि यागस्यैव फलपर्यन्तं स्थायित्वं कल्प्यताम् । लाघवमपि भवति । किं व्यापारकल्पनया इति चेत् – तृतीयादि क्षणे प्रत्यक्षत्वं स्यात् । अतः अवश्यं कश्चनव्यापारो वाच्यः ।

सोऽपि च न देवताप्रसादरूपः । तस्य देवतानिष्ठत्वेन फलव्यधिकरणस्य फलजनकत्वं न स्यात् । अपि च देवतायाः चैतन्यम् , विग्रहः, प्रसादः, तस्य च स्थायित्वमित्यनेकार्थकल्पनापत्तिः । अतः परिशेषात् अपूर्वमेव कल्पनीयम् । तत्र प्रमाणं तु अर्थापत्तिरेव । तच्च यागेन अपूर्वं कृत्वा स्वर्गं भावयेत् इति श्रुतार्थापत्तिकल्पित वैदिकशब्दगम्यत्वादेव न अप्रामाणिकम् ।

अपूर्वस्य फलसाधनत्वे यागस्वर्गयोः श्रुतः साध्यसाधनभावः बाध्येत इति चेत् – अपूर्वस्य शक्तिरूपत्वेन व्यापाररूपत्वेन वा कल्प्यमानत्वात् शक्तिमतः व्यापारवतो वा साधनत्वं न हीयते । यथा वा – ज्वालारूपव्यापारेण पाकादिरूपकार्यजननेऽपि अग्नेः साधनत्वं न बाध्यते तद्वत् । "व्यापारेण व्यापारिणो नान्यथा सिद्धिः" इति न्यायात् ।

एवमपि शक्तिमति व्यापारवति वा यागे नष्टे तन्निष्ठापूर्वस्यापि नाशः स्यात् इत्युक्तौ अपूर्वस्य यागजन्यत्वेऽपि न यागनिष्ठत्वम् परिकल्प्यते । यथा – अनुभवव्यापारस्य संस्कारस्य अनुभवजन्यत्वेऽपि न अनुभवनिष्ठत्वं कल्प्यते । किन्तु – फलबलेन स्मृतिसमानाधिकरणत्वसिध्यर्थम् आत्मनिष्ठत्वमेव कल्प्यते । तथाऽत्रापि फलसामानाधिकरण्यसिध्यर्थं फलबलेन फलभोक्त्रात्मनिष्ठत्वमेव कल्प्यत इति न विरोधः ।

अत एव गयाश्राद्धादौ यत्र पितुः पुत्रस्य च फलभोक्तृत्वं शास्त्रान्तरप्रमितं तत्र उभयनिष्ठं अपूर्वद्वयकल्पनम् । अपूर्वद्वयमपि च तत्र कीर्तननाश्यमेव । एवं दम्पत्योः उभयोरपि फलभोक्तृत्वादुभय-निष्ठमपूर्वद्वयम् । तत्रापि तत्तनिष्ठकीर्तनस्यैव तत्तन्निष्ठापूर्वनाशकत्वम् ।

यत्र अन्यतरस्यैव रोगादिनिवृत्यर्थं दर्शपूर्णमासाद्यनुष्ठानं, तत्र सत्यपि इतरस्य व्यासज्यवृत्तिकर्तृत्वे फलभोक्तृत्वाभावात् न तन्निष्ठापूर्वान्तरकल्पनम् । अपि तु फलभोक्तृत्वनिष्ठमेव । एवं यत्र जातेष्ट्यादौ पुत्रस्यैव फलभोक्तृत्वं न तु पितुः अतः तन्निष्ठमेवापूर्वम् । अत एव षष्ठाद्ये अधिकारलक्षणमेवमुक्तम् – प्रकृतकर्मजन्यफलेच्छाफलभोक्तृत्वान्यतरसमानाधिकरणत्वे सति कर्तृत्वम् – अधिकारः इति । अतः कदाचित् फलभोक्तृत्वाभावेऽपि फलेच्छायाः सद्भावात् न कर्तृत्वं भज्यते ।

आरादुपकारकाणामङ्गानां तु उत्पत्त्यपूर्वनिष्ठ तद्व्यवहितापूर्वजननानुकूलयोग्यतासंपादनं स्वावान्तरा-पूर्वद्वारा फलम् ।

सन्निपत्योपकारकाणामङ्गानां तु व्रीह्यादिस्वरूपे आनर्थक्यप्रसक्तौ प्रधाननिष्ठ उत्पत्यपूर्व-जननानुकूल योग्यतासम्पादनमेव फलम् । अत एव तत्तदुत्पत्यपूर्वजननानुकूल तत्तत्प्रधानगत तत्तद्योग्यतासम्पादनपर्यन्तं प्रोक्षणादिजन्यावान्तरापूर्वस्य अवस्थानं कल्प्यते ।

तद्यत्र एकमेवप्रधानं पूर्वोत्तराङ्गविशिष्टं फलसाधनं तत्र प्रधानानन्तरक्षणे एकमपूर्वम् । अपरं च सर्वाङ्गसमाप्त्युत्तरं परमापूर्वम् ।

एवं यत्र प्रधानान्यनेकानि तत्रापि तावत्युत्पत्यपूर्वाणि, एकं परमापूर्वम् इत्युत्सर्गः यत्र दर्शपूर्णमासादौ "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्येवं समुदायद्वयश्रवणं तत्र एकस्मिन्समुदाये उत्पत्यपूर्वत्रयेण सर्वाङ्गकरणान्ते एकैकं समुदायापूर्वं जन्यते । ततश्च समुदायद्वयानुष्ठानान्ते एकं परमापूर्वमिति विशेषः । अत एव आरादुपकारकाङ्गानामपि तत्तत्समुदायापूर्वे एव उपयोगकल्पनात् समुदायद्वयेऽपि अङ्गानां पुनः पुनः अनुष्ठानं न विरुध्यते ।

पूर्वपक्षे – क्लृप्तयागध्वंसादेव स्वर्गादिफलं सिध्यति । तत्र पुनः अपूर्वकल्पनं गौरवम् इत्युक्त्वा – यथा – सन्ध्यावन्दनाभावः प्रत्यवायजनकः इति दृष्टान्तः प्रदर्शितः । किन्तु – नित्यकर्मणामभावः अथवा अननुष्ठानं प्रत्यवायजनकमिति मीमांसकैः नोच्यते । तदुक्तं भट्टपादैः –

स्वकाले यदकुर्वंस्तु करोत्यन्यदचेतनः ।
प्रत्यवायोस्य तेनैव नाभावेन स जन्यते ॥ इति ।

एवं च विहिते काले विहितकर्माननुष्ठानसहकृतं कर्मान्तरकरणं प्रत्यवायजनकमित्यङ्गीक्रियते । अतः तत्रापि न अभावस्य फलकारणत्वं किन्तु भावस्यैव ।

तच्च अपूर्वं किं रूपमित्युक्तौ अपूर्वं च यागजन्यः शक्तिविशेषः इत्युच्यते । तदुक्तं भट्टपादैः –

तस्मात्फले प्रवृत्तस्य यागादेः शक्तिमात्रकम् ।
उत्पत्तौ वापि पश्चादेः अपूर्वं न ततः पृथक् ॥ इति ।

केवलं अदृष्टरूपत्वे "व्रीहीन्प्रोक्षति" इत्यादौ प्रोक्षणजन्यस्य अपूर्वस्य अचेतने व्रीह्यादौ बाधप्रसङ्गः । शक्तेश्च द्रव्यकर्मगुणाश्रयत्वेन न क्षतिः । तस्मात् – यागानुष्ठानानन्तरं नष्टेऽपि व्यापारिणि यागे व्यापारस्य अपूर्वस्य फलबलेन आश्रयान्तरकल्पनोपपत्तेः अपूर्वव्यापारेणैव यागादीनां फलजनकत्वसिद्धौ "यजेत स्वर्गकामः" इत्यादौ वेदवाक्ये श्रुतयागस्वर्गयोः साध्यसाधनभावान्यथानुपपत्या श्रुताविरोधेनैव अपूर्वं कल्प्यते इति न क्वाप्यनुपपत्तिः ।

सूत्रार्थस्तु – चोदना पुनरारम्भः । पुनः शब्दः – यतः इत्यर्थे । चोद्यते आक्षिप्यते इति चोदना – अपूर्वम् । कर्मणि ल्युट् । अस्तीति शेषः । कुतः ? यतः कर्मणा फलस्य आरम्भः – उत्पत्तिः श्रूयते । साध्यसाधनभावः श्रूयते इति यावत् ।

# दर्विहोमाधिकरणम्

विद्वान् हित्लळ्ळि सूर्यनारायणनागेन्द्रभट्टः, कल्याणनगरी (बेङ्गळूरु)

"यदेकया जुहुयाद् दर्विहोमं कुर्या"दिति श्रूयते । अस्मिन् दर्विहोमशब्दे भवति संशयः – किं गुणविधिः उत कर्मनामधेयम् इति । दर्विहोमः कर्मनामधेयम् , होमसंयोगात् । होमशब्दोऽत्र श्रूयते । तत्प्रधानश्चायं समासः । दर्विशब्द उपसर्जनम् । होमश्च कर्म । अथवा – जुहुयादिति कर्मोच्यते । तेन समुचितो यदेकया जुहुयादिति । तस्मात् कर्मनामधेयम् ।

स्थितं तावद् अपर्यवसितम् । ततोऽर्थान्तरं प्रक्रियते ।

यदा कर्मनामधेयम् , तदा चिन्त्यते – किं, स्मार्तानां कर्मणां अष्टकादीनां नामधेयम् उत लौकिकानां वैदिकानाञ्च । स लौकिकानां स्यात् । स खलु दर्विहोमशब्दो लौकिकानां कर्मणां नामधेयं स्यात् , कर्तुस्तदाख्यत्वात् । तेषां कर्ता तेन दर्विहोमशब्देन समाख्यायते । शिनीनां दार्विहोमिको ब्राह्मणः, अम्बष्ठानां दार्विहोमिको ब्राह्मण इति । यश्च यत्करोति स तेनाख्यायते । यथा लावकः पावक इति । यदि चाष्टकादीनां नामधेयमेतत् , ततस्तेषां कर्मणां कर्ता दार्विहोमिक समाख्यामर्हतीति । तस्माल्लौकिकानां नामधेयम् इति पूर्वपक्षः ।

लौकिकानां वैदिकानां च नामधेयमेतत् । न लौकिकानामेव, दर्शनाद् वास्तुहोमे । वास्तुहोमे हि वैदिके दर्विहोमत्वं दर्शयति । "यदेकया जुहुयाद् दर्विहोमं कुर्यात्" "पुरोनुवाक्यामनूच्य याज्यया जुहोति सदेवत्वाय" इति सिद्धान्तः ।

इदानीं चिन्त्यते – किं यजतिचोदनानां जुहोतिचोदनानां च सर्वेषां नामधेयम् उत जुहोतिचोदनानामेवेति । अविशेषात् सर्वेषामिति प्राप्ते – उच्यते । जुहोतीनां नामधेयम् । तत्संयोगात् – होमशब्दसंयोगात् । अयं होमशब्दो जुहोतेर्वाचको न यजतेः । यजतौ लक्षणया स्यात् । तस्माज्जुहोतिनामधेयम् ।

स्थितादुत्तरमुच्यते – यदुक्तं कर्मनामधेयं दर्विहोम इति, तन्न, गुणाभिधानं स्यात् । गुणविधिरित्यर्थः। द्रव्योपदेशात् । द्रव्योपदेशोऽवगम्यते दर्व्या होमो दर्विहोम इति । एवमेतौ दर्विहोमशब्दौ यथाप्रसिद्धिकल्पितौ भविष्यतः । तस्माद् गुणविधिः इति पूर्वपक्षः ।

नायं गुणविधिर्युज्यते । लौकिकानां तावद् आचारगृहीता दर्विः । त्वग्बिलया मूलदण्डया दर्व्या जुहोतीति । सा न विधातव्या । श्रौतानामप्यन्यानि होमार्थानि पात्राणि आम्नातानि । स्रुवेण जुहोति, चमसेन जुहोतीति । तैः सह दर्वेः विकल्पः स्यात् । स चान्याय्यः । स्रुवादीनां विधायकः शब्दोऽस्ति, न दर्वेः । तत्र हि आनुमानिको विधिशब्दः इति सिद्धान्तः ।

दर्विहोमशब्दः कर्मनामधेयमित्युक्तम् । तत्र चिन्त्यते किमपूर्वा दर्विहोमा उत कुतश्चिद् धर्मग्राहिणः इति । नापूर्वाः, इतिकर्तव्यताऽविधेः । अविहितेतिकर्तव्यताकं कर्म विहितेतिकर्तव्यताकाद् धर्मान् गृह्णातीत्युक्तम् । अविहितेतिकर्तव्यताकाश्च अमी । तस्मात् पूर्ववन्त इति । यदेतदेवम् , तदेतदापतति किम्पूर्वा इति । अत्रोच्यते –

तस्मिन् खलु दर्विहोमे सौमिको विध्यन्तः स्यात् , अव्यक्तत्वात् । अव्यक्तचोदनः सोमः । अमी अपि चाव्यक्तचोदनाः भिन्ने जुहोति इति । अतश्चोदनासामान्यात् सौमिको विध्यन्त इति पूर्वपक्षः ।

नात्र सौमिको विध्यन्तो न्याय्यः, स्वाहाकारेण संयोगात् । स्वाहाकरेण संयुक्ता दर्विहोमाः । पृथिव्यै स्वाहा अन्तरिक्षाय स्वाहेति । तन्त्रे च सौमिके वषट्कारो निर्दिष्टः । तेनास्य विप्रतिषेधः, उभयोः प्रदानार्थत्वात् । यदि सौमिको विध्यन्तः, ततो वषट्कारेण भवितव्यम् । तत्रैतत् स्वाहाकारान्ताम्नानमनर्थकं स्यात् । अथ विकल्पः क्रियते, तथाप्युभयोः पक्षे बाधः । अथ त्वपूर्वा दर्विहोमाः, नैष विरोधो भविष्यति । तस्मादपूर्वा इति सिद्धान्तः ।

जुहोतिचोदना ये दर्शपूर्णमासयोरङ्गकर्मविशेषास्ते नारिष्टहोमा दर्विहोमेषु प्रवर्तेरन् । ते हि प्रवृत्तधर्माणः सर्वेष्टिषु सर्वपशुबन्धेषु प्रवर्तमाना दृष्टाः । यस्य च यो धर्मः प्रायेण दृष्टः स तस्यादृश्यमानोऽप्यनुमीयते । यथा यः परार्थान् प्रायेण करोति, अन्यस्मिन्नपि परार्थकरणे स एव सम्भाव्यते । तस्मात् तेषां प्रवृत्तिः इति पूर्वपक्षः ।

यदेतद् नारिष्टहोमानां प्रवृत्तौ दर्शनमुपदिष्टम् , तद् असाधकम् । तत्राभावस्य हेतुत्वात् । अप्रतिष्ठितत्वं त्र्यम्बकाणां प्रतिज्ञाय तदुपपादनार्थमिध्मादीनामभावो हेतुत्वेनोपदिश्यते । यदि च नारिष्टहोमाः प्रवर्तेरन् , ततोऽङ्गप्रधानार्थत्वाद् इध्माबर्हिषोः सामिधेनीनां च त्र्यम्बकेषु भाव एव स्यात्। तत्रायं तदभावोऽसत्त्वाद् हेतुत्वेन न युज्यते । तस्मान्नारिष्टहोमानामप्रवृत्तिरिति सिद्धान्तः ।

येषां वा यागानामपरयोः अग्न्योः होमः, तेषां पत्नीसंयाजानां प्रवृत्तिः स्यात् , अविरोधात् । तत्र विरोधो नास्ति, यो नारिष्टहोमानां प्रवृत्तावुक्तः । तेषां हि इध्मा बर्हिः सामिधेन्यश्च नैवाङ्गम् । तदभावदर्शनं तत्र न विरुध्यते । प्रवृत्तिधर्माणस्तेऽपि जुहोतिचोदनाश्च । तस्मात् तेषां प्रवृत्तिः इति पूर्वपक्षः ।

नैतद् युक्तम् । यतस्तत्रौषधानि चोद्यन्ते दर्विहोमे । यथा त्र्यम्बकेषु पुरोडाशः करम्भपात्राणि तण्डुला इत्येवमादीनि । तानि स्थानेन गम्येरन् , आज्यस्थानापत्त्या आज्यधर्माः प्राप्येरन् । ते न शक्यास्तत्रानुष्ठातुम् । अनुष्ठीयमाना वा अकृतकार्याः स्युः । तत्र चोदको बाध्येत । तस्मान्न तेषां प्रवृत्तौ किञ्चित् प्रयोजनमस्ति । याज्यानुवाक्ये अपि मन्त्रान्तरेण निवर्त्येते । वषट्कारः स्वाहाकारेण इति उत्तरम्।

पिष्टलेप फलीकरणहोमयोर्वा प्रवृत्तिः स्यात् , औषधसामान्यात् । यश्च पत्नीसंयाजानां प्रवृत्तौ दोष उक्तः धर्माणामानर्थक्यम् , तदत्र नास्ति । तत्र औषधधर्मा निर्वापणादयः शक्याः कर्तुम् । तस्मात् तयोः प्रवृत्तिः इति पूर्वपक्षः ।

न त्वेतदेवम् । यतः प्रतिपत्तिकर्मणी एतौ होमौ । दर्विहोमाश्च प्रधानकर्माणि । तेषां दूरतो भेदः । सामान्यतश्च धर्मप्राप्तिरिष्यते । यच्चोक्तम् औषधधर्मास्तत्र शक्याः कर्तुमिति । प्रतिपत्तित्वाद् अप्रयोजकावेव निर्वापणादीनां धर्माणाम् । अतस्तत्प्रकृतित्वं तेनैव न्यायेन नोपपन्नम् । नापि प्रयोजनवत्। तस्माद् एतदप्ययुक्तम् । एवं न कुतश्चिदपि दर्विहोमानां धर्मप्राप्तिर्युज्यते । तस्माद् अपूर्वाः इति सिद्धान्तः ।

# सामान्यविशेषशास्त्रादिविचारः

**विद्वान् देवदत्तशर्मा, पुण्यपत्तनम् (पुणे)**

मीमांसाशास्त्रे बाधविचारे सामान्यविशेषन्यायः, सावकाशनिरवकाशन्यायः, उत्सर्गापवादन्यायः इत्येवंविधाः न्यायाः व्युत्पादिताः । तत्प्रदर्शनाय तत्र तत्र विषयवाक्यान्यपि उदाह्रियन्ते । तत्र न्यायप्रदर्शनं सोदाहरणं यथामति विव्रीय तेषां परस्परभेदकम् इह चिन्त्यते ।

सामान्यविशेषशास्त्रस्थले हि अनारभ्याधीतम् "आहवनीये जुहोति" इति सोमक्रयप्रकरणपठितं "पदे जुहोति" इति वाक्यञ्च उदाहरणं भवति ।

उभयत्र जुहोति आकृत्यधिकरणन्यायेन धर्ममेव शक्त्या बोधयति । प्रथमे होमत्वसामान्यम् , द्वितीये प्रकरणविशेषपठितत्वात् विजातीयहोमत्वम् , इतः व्यक्तिलक्षणया सर्वान् व्यक्तिविशेषान् बोधयत् आहवनीयशास्त्रं यावता प्रकृतव्यक्तिं गमयति तावता विशेषशास्त्रीयजुहोतिः विजातीयहोमं लक्षयतीति सामान्यशास्त्रं मन्थरगतिकं भवति इति पदशास्त्रेण तत् बाध्यते ।

सावकाशनिरवकाशन्यायस्थले च सावकाशत्वेन अभिमतं शास्त्रं ज्योतिष्टोमप्रकरणगतं "त्सरावा एतद्यज्ञस्य तस्माद्यत्किञ्चित्प्राचीनमग्नीषोमीयात् तेनोपांशु चरन्ति" इति, निरवकाशशास्त्रं तु "मन्द्रं प्रायणीयायां मन्द्रतरमातिथ्यायाम्" इत्यादि शास्त्रम् । तत्र त्सरा वा इत्यादिवाक्ये विद्यमानयत्किञ्चित् इति भागे विद्यमानं यत् , यत् इति पदं, तस्य सर्वनामत्वात् , तस्य च बुद्धिस्थपरामर्शकत्वात् , ज्योतिष्टोमस्य अग्नीषोमीययागपूर्ववर्तिनः ते पदार्थाः तान् तत्तत्पदार्थत्वेन परामृशति । तथा च अनेन वचनेन प्रायणीयादीनां प्रायणीयत्वेनैवोद्देश्यत्वमिति आयाति ।

मन्द्रं प्रायणीयायामित्यादिवचनमपि मन्द्रत्वविधायकं, तान् प्रायणीयत्वदिरूपविशेषधर्मपुरस्कारेणैव उपस्थापयति । तथा च मन्द्रेत्यादिशास्त्रं निरवकाशम् , उभयोरपि उद्देश्यतावच्छेदकयोरभेदात् ।

सामान्यविशेषोदाहरणे तु सामान्यस्य शक्योद्देश्यं होमत्वं विशेषस्य तु विजातीयहोमत्वमिति स्पष्टः विलम्बः । प्रकृते तथाविधसामान्यविशेषभावस्यासत्वात् उभयोरपि युगपत्प्रवृत्तिसम्भवात् , त्सराशास्त्रप्रवृत्तौ मन्द्रेत्यादिशास्त्रं निरवकाशं स्यात् इति तत् पूर्वं बाधते ।

यद्यपि भाट्टदीपिकादिग्रन्थेषु उत्सर्गापवादन्यायव्युत्पादकम् अधिकरणान्तरं न दृष्टम् , सामान्यविशेषस्थले एव "एवं सामान्यनिषेधोऽपि विशेषविधिना बाध्यते" इति तत्रोक्तम् । तथापि अद्वैतसिद्धिकारैः अस्य न्यायस्य आगमबाधोद्धारप्रकरणे पृथक् उत्थापितत्वात् सम्भवद्भेदाभिप्रायेणात्र चिन्त्यते । "मा हिंस्यात् सर्वा भूतानि" इति उत्सर्गशास्त्रम् । अत्र च मा इति नञ्समानार्थकपदसमभिव्याहारात् भाट्टरहस्योक्तवस्तुतस्तुकल्परीत्या मा इत्यस्य अभावः अर्थः, तस्य च आख्यातोपात्तभावनायां प्रतियोगितासम्बन्धेन अन्वयः । भूतनिष्ठकर्मतारूपद्वितीयार्थस्य च

स्वनिरूपकहिंसाकरणकत्वसम्बन्धेन, एवं समानपदोपात्तधात्वर्थस्य करणताकत्वसम्बन्धेन तत्रैव भावनायां अन्वयः । विध्यर्थोऽपि प्रयोज्यत्वसम्बन्धेन तस्यामेव अन्वेति । तथा च सर्वभूतकर्मिका, हननकरणिका, अभावप्रतियोगिभूतभावना विधिप्रयोज्या इति बोधः ।

अग्नीषोमीयं पशुमालभेत इति अपवादशास्त्रे तु तुल्यन्यायेन वाक्यार्थबोधे नञ्समभिव्याहारात् अग्नीषोमीयपशुसाध्यिका हिंसाकरणिका भावना विधिप्रयोज्या इति बोधः भवति । तत्र पूर्वत्र उत्सर्गशास्त्रे अभावः प्रतियोगितासम्बन्धेन विशेषणमित्यस्य अर्थात् भावनाभावः वाक्यार्थः पर्यवस्यति । अपवादवाक्ये तु भावना वाक्यार्थः । तथा च पूर्वोक्तस्थलद्वयापेक्षया अस्य स्थलस्य भेदः । प्रकृते भावाभावयोः परस्परविरुद्धयोः साक्षात् विधिप्रतिषेधविषयत्वात् । पूर्वोक्तस्थलयोः पदशास्त्रे आहनीयाभावस्य मन्द्रेत्यादिशास्त्रे उपांशुत्वाभावस्य अर्थसिद्धत्वेऽपि न साक्षात् विधिविषयत्वम् । प्रकृते तु तथा । तथा च एतादृशभेदकान् आदाय सिद्धिकारैः न्यायभयमाहत्य दर्शितमिति वक्तुं शक्नुमः ।

# अभ्युदयेष्टिविचारः

**विद्वान् एस् . गुरुनाथघनपाठी, मद्रपुरी (चेन्नै)**

करुणावरुणालयानां जगद्गुरु श्रीश्रीचरणानां चरणनलिनयोः साष्टाङ्गं वन्दनानि समर्प्य यथामति वाक्यार्थविषयः विव्रियते ।

पूर्वमीमांसायां द्वादशलक्षण्यां षष्ठाध्याये पञ्चमपादस्य आदिमम् अधिकरणमत्र स्वीकृतं विचार्यत्वेन । अस्य च अधिकरणस्य नाम "अभ्युदयेष्टिः" इति । "अभ्युदितेष्टिः" इति तु खण्डदेवाचार्याः सर्वत्र व्यवहरन्ति । अस्य अधिकरणस्येदं विचारार्हं वाक्यं – "यस्य हविः निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति त्रेधा तण्डुलान् विभजेत् ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्यात् ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधँश्चरुं येऽणिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुम्" इति । अस्य वाक्यस्यायमर्थः – (दर्शपूर्णमासप्रकरणे श्रुतम् इदं वाक्यम्) यः कश्चित् उपक्रान्तदर्शयागः उपक्रमानन्तरं "मया भ्रमेण चतुर्दश्यामेव सङ्कल्पः कृतः । श्वः खलु अन्वाधाय परश्वः यष्टव्यमासीत्" इति चिन्तयति तस्यायं प्रयोगः – निरुप्तान् तण्डुलान् पूर्वदेवताभ्यः विभज्य अन्याभ्यः देवताभ्यः प्रदद्यात् । मध्यमाः – अर्धखण्डाः । स्थविष्ठाः – अखण्डाः । अणिष्ठाः – सूक्ष्माः इति ।

**अत्रायं संशयः** – नैमित्तिकं इदं कर्म प्रकृतादन्यत् किं, उत गुणान्तरयुक्तं तदेवेति । तद्बीजञ्चेदमेव – पञ्चशरावववाक्ये वाक्यभेदभिया भिन्नं कर्मेति पूर्वस्मिन् पादे निर्णीतम् । किन्तद्वदेवात्रापि कर्मान्तरं उत ये स्थविष्ठा इत्यादिवाक्यस्थयच्छब्दबलात् गुणान्तरयुक्तं तदेवेति ।

अत्र "यस्य हविरिति" यच्छब्देनास्य कर्मणः नैमित्तिकत्वं ज्ञायते । निमित्तं किमित्याकाङ्क्षायां यावता विवक्षितेन विशेषणेन चन्द्राभ्युदयस्य निमित्ततानिर्वाहः सम्भवेत् तावताऽलमित्याशयेन ग्रन्थकारैः चन्द्राभ्युदयावच्छिन्नदिने यागसङ्कल्प एव निमित्तं इति निर्णीतम् । स च सङ्कल्पः दर्शयागस्यैव, न तु पूर्णमासस्य । तदानीं चन्द्रोदयस्य नित्यत्वात् । भ्रमात्मकस्य अमावास्याज्ञानस्य निमित्तस्य कृष्णपक्ष एव सम्भवात् ।

**अत्रायं पूर्वपक्षः** – प्राप्ते कर्मणि अनेकार्थविधानं न सम्भवति । अप्राप्ते तु विधीयन्ते बहवोऽप्येक यत्नतः । अत्र दर्शयागः पूर्वमेव प्राप्तः । तस्मिन् प्राप्ते दर्शयागे अनेके पदार्थाः – अग्न्यादि देवताः, दातृत्वादयः देवतागुणाः, दधिपयसोरधिकरणत्वं, (प्रकृतौ तयोः प्रधानहविष्ट्वमेव न तु तत्रान्यस्य हविषः पाकः विहितः । अत्र "दधँश्चरुम्" "शृते चरुम्" इति तयोः अधिकरणत्वं विधेयमेव), पुरोडाशीयहविषश्चरुत्वम् इति श्रूयन्ते । तेषाञ्च सर्वेषां पदार्थानां विधाने वाक्यभेदः प्रसज्येत । एवं अष्टाकपालत्वादयः पुरोडाशधर्मा अपि विधेया एव । आग्नेये अष्टाकपालत्वप्राप्तावपि असोमयाजिनः ऐन्द्राग्नयागे तदप्राप्त्या विधानस्यावश्यकत्वात् ।

अन्यच्च, समस्तपदानां परस्परान्वयस्य व्यत्पुन्नत्वेऽपि असमस्तपदस्थले तादृशान्वयस्य क्रियाव्यतिरेकेण अव्युत्पन्नत्वेन "दात्रादिपदानां यौगिकत्वात् सामानाधिकरण्येनैव अग्न्यादिपदार्थेषु अन्वयः । ततश्च वाक्यभेदं विनैव दातृत्वादिगुणविशिष्टाग्न्यादिविधानं" इति रीतिरपि न सङ्गच्छते । किञ्च ये स्थविष्ठाः इति येऽणिष्ठा इति द्वयोर्वाक्ययोः क्रमेण "स्थविष्ठतण्डुलाः दधि"चेति "अणिष्ठतण्डुलाः श्रृतं" चेति प्रत्येकं द्रव्यद्वयोद्देशाद्वाक्यभेदः ।

ननु कुतो गौरवावहः कर्मभेदः स्वीक्रियते ? प्रयोगभेद एवास्तु लाघवात् इति चेन्न । निमित्तस्य विनियोगान्वयित्वस्यैव यावज्जीवाधिकरणे स्थापितत्वेन अभ्युदयेष्टिवाक्ये प्रयोगान्वयिगुणस्याश्रुतत्वेन प्रयोगभेदः न युज्यते । अत एव उत्पत्त्यन्वयिनो गुणस्य कर्मभेदकत्वादेव यथा वाजिनयागे न भावनामात्रभेदकता अपि तु कर्मभेदः तथैवात्रापि । तादृशयागप्रदेयप्रकृतिभूतानां तण्डुलानां मध्यमादिभावेन त्रेधा विभागः "त्रेधा तण्डुलान् विभजेत्" इति वाक्येन प्रयोगान्तःपातितया विधीयते । दधिश्रृतयोर्लक्षणया करणत्वेनान्वयः । एतेषाञ्च नैमित्तिकानां कर्मणां स्वकाले क्रियमाणदर्शप्रयोगाङ्गत्वं प्रकरणात् । तानि च द्वादशाधिकरणन्यायेन विकल्प्यन्ते इति पूर्वपक्षः ।

**अत्रायं सिद्धान्तः** – द्रव्याण्युद्दिश्य केवलानां देवतानां विधानेन न वाक्यभेदः । देवताकारकस्यैकत्वात् न विधेयानेकता । अथवा परस्परान्वयः स्वीक्रियताम् (दात्रादिपदानाम् अग्न्यादि पदैः सह) । उतापिवा अग्नीन्द्रविष्णुपदानां तात्पर्यग्राहकत्वमङ्गीकृत्य एकपदोपादानेन (अग्निर्दातैव दातृशब्दार्थ इति) विशिष्टस्य व्युत्पन्नत्वात् विधेयभेदो नास्त्येव । लाघवात् प्रकृता एव यागाः देवतोपपादकत्वेन अन्वीयन्ते । स्थविष्ठाणिष्ठवाक्ययोः परं उद्देश्यानेकत्वनिबन्धो वाक्यभेदः स्वीक्रियतेऽगत्या इति भाष्यकारानुयायी पन्थाः ।

नवीनास्तु – तादृशवाक्यभेदस्वीकारे प्रमाणाभावात् द्रव्यदेवताविशिष्टभावनाविधिपक्ष एव श्रेयान् । अगत्या स्वीक्रियत इत्युक्ते पञ्चशराववाक्येऽपि तदापत्तिः केन वार्येत । तत्र खलु विधेयानेकत्वनिबन्ध-वाक्यभेदात् कर्मभेदः अङ्गीकृतः । तत्राप्यगत्या वाक्यभेदः, तथापि कर्मैकत्वमेवेत्याग्रहं कुर्वतः पक्षं केन वारयामः । अन्यच्च – यच्छब्देन (ये स्थविष्ठाः इत्यादि) पूर्वपरामर्शकेन पूर्वयागीयत्वोपस्थित्या यागान्तरप्रमितिः अनुपपन्ना । किञ्च मध्यमादिवाक्यैः अर्थात् त्रेधाविभागस्य प्राप्तत्वात् "त्रेधा तण्डुलान् विभजेत्" इति वाक्येन न त्रेधाकरणं विधीयते । अपि तु "त्रेधा, तण्डुलान्" इति पदद्वयं आनर्थक्यभिया प्रकृतहविःपरं अङ्गीकृत्य तस्य प्रकृतहविषः अपरित्यक्तयागान्वयस्यैव प्राकृतीभ्यः देवताभ्यः अपनयो विधीयते । अत्र च "विभजेत्" इति श्रुतिगतपदस्य अपनय इति तात्पर्यं सञ्जातम् । तत्कथमित्युक्ते प्रभावल्ल्यां शम्भुभट्टैर्लिखितं "मनुः पुत्रेभ्यो दायं व्यभजत्" इत्यादिषु तथा प्रयोगदर्शनादिति । आपस्तम्बीयश्रौतप्रायश्चित्तग्रन्थेषु परमप्रमाणभूतः अद्यतनकाले श्री श्रीनिवासदीक्षितीय एव । तत्रापनय-शब्दार्थविवरणे श्रीमद्भिः दीक्षितैः एवं लिखितं – यदा चन्द्राभ्युदयज्ञानं तदनन्तरक्रियमाणेषु पदार्थेषु पूर्वदेवतास्थाने अभ्युदयेष्टिवाक्यविहितानां देवतानां निर्देशः "अपनयः" इति । उदाहरणार्थं – "अग्नये जुष्टमधिवपामि धान्यमसि धिनुहि देवान्" इति वक्तव्ये सति अधिवापात्पूर्वं यदि चन्द्राभ्युदयज्ञानं तदा "अग्नये दात्रे जुष्टमधिवपामीत्यादि" विकारः ।

प्राकृतहविषः प्राकृतदेवताभ्यः अपनये सञ्जाते सति तासां (प्राकृत) देवतानां यागसम्बन्धोऽप्यपनीतो भवति । तेषां च हविषां यागापेक्षायां यच्छब्दबलात् प्रकृता एव यागा अन्वीयन्त इत्युक्तमेव । पञ्चशरावववाक्ये तु तादृशापनयविध्यभावादेव कर्मभेद इष्टः । अतश्च अभ्युदयेष्टिः न कर्मान्तरं अपि तु निमित्ते नैमित्तिकं तद्यागानामेव भावनान्तरं स्वकालक्रियमाणदर्शयागाङ्गम् । अकर्मान्तरत्वे लिङ्गमप्यनुकूलं समस्ति । तथा हि – यदि बिभीयादभिमोदेष्यतीति महारात्र एव हवींषि निर्वपेत् इति । तद्यदि कर्मान्तरं अभ्युदयेष्टिः स्यात् तर्हि सेयं श्रुतिः अन्ययागीयद्रव्यस्य अन्ययागे विनियोगं विधत्त इत्यनुपपन्नेवापद्येत । अतो अकर्मान्तरत्वे लिङ्गानुकूल्यमपि वर्तते ।

अत्र विधिरसायने श्रीमदप्पय्यदीक्षितेन्द्रैः सुसूक्ष्मः धर्मशास्त्रीयो विषयः प्रतिपादितः – ‘‘न हि चौर्यलब्धद्रव्यस्य कृतेऽपि चौर्यप्रायश्चित्ते कर्मविनियोगयोग्यता लभ्यते’’ इति । एवं युक्तिभिः लिङ्गानुकूल्येन च न कर्मान्तरमभ्युदयेष्टिः अपि तु दर्शस्यैवैको नैमित्तिकः प्रयोगः इति ।

# भूवादयो धातवः

**विद्वान् हेच्. एम्. शिङ्गप्पः, महीशूरपुरी (मैसूरु)**

भूवादय इति निर्देशः न संघटते । भूरादिः येषां ते इति विग्रहे भ्वादयः इति भवति । यदि असंहिततया निर्देशः भू आदयः इति । मध्ये वकारस्तु न युज्यते । किञ्च असंहिततया निर्देशोऽपि न युक्तः । समासे संहितायाः नित्यत्वात् । एवञ्च वकारघटितः निर्देशः सर्वथा न युज्यते ।

अत्र वार्तिककारैरेवमभिहितम् – भूवादीनां वकारोऽयं मङ्गलार्थः प्रयुज्यते इति । अभिधानधर्मस्य अभिधेये उपचारः, भ्रमरे द्विरेफः इति यथा । सूत्रोच्चारिते भूवादिशब्दे इत्यर्थो विवक्षितः । माङ्गलिकः आचार्यः महतः शास्त्रौघस्य मङ्गलार्थं, वकाररूपम् आगमम् मध्ये प्रयुक्तवान् । निपातनेन आगमरूपः वकारः कृतः । न चायम् असाधुः, वैयाकरणनिकाये आगमानां प्रसिद्धत्वात् । यथा अपूर्वस्य हि दध्यादेर्लाभः लोके मङ्गलं सूचयति, तथेहापि वकारः मङ्गलार्थः प्रयुक्तः । वेदेपि त्रियम्बकम् यजामहे इत्यत्र यकारः अतिरिक्तः श्रूयमाणः अपूर्वार्थः । अनेन सूत्राणां छान्दसत्वमपि सिद्धम् भवति । तदेवोक्तं "छन्दोवत् सूत्राणि भवन्तीति"। अथवा वकारे सति अविकृतः भूशब्दः उच्चार्यमाणः महाव्याहृतिस्मारकः भवतीति वकारः मङ्गलार्थकः सम्पद्यते । वकारस्य अमृतबीजत्वात् मङ्गलसूचकत्वमपि ।

अथ आदिग्रहणं किमर्थम् इति प्रश्नः । यथा जनपदशब्दात् क्षत्रियादञ् इत्यादिसूत्रैः अञादिप्रत्ययान् विधाय ततः ते तद्राजा इति संज्ञा तद्वत् भ्वादीन् सूत्रे पठित्वा ते धातवः इति वक्तव्यम् इति चेत् , सत्यम् एवं सिद्धे आदिग्रहणं यत् क्रियते तेन ज्ञाप्यते सूत्रपाठादन्यः कश्चन गणपाठो विद्यत इति । तथा च भूशब्दः आदौ पठितः, तेषाञ्च धातुसंज्ञा इति इष्टं सिध्यति ।

गणपाठेन धातुसंज्ञायां समानशब्देषु अतिप्रसक्तिः भवति । तस्य प्रतिषेधो वक्तव्यः । प्रापणार्थकः या इति धातुः, या इति टाबन्तं सर्वनाम । अत्र धातोरित्यधिकृत्य विहितं कार्यं सर्वनाम्नोपि स्यात् । तथा वा इति गतिगन्धनाद्यर्थः वा इति विकल्पार्थकश्च । विकल्पार्थकस्यापि धातुत्वं स्यात् , तथा दिव् इति क्रीडार्थकोपि वर्तते, स्वर्गवाचकोपि, अनिष्टस्य स्वर्गवाचकस्यापि धातुत्वं स्यादिति समानशब्दानां प्रतिषेधो वक्तव्यः इति चेत् , एषां धातुत्वेपि धातुत्वप्रयुक्त प्रत्यया अत्र न भवन्ति । यतो हि तव्यत्तव्यानीयरः इत्यादयः प्रत्ययाः साधनसम्बन्धे विहिताः साधनसम्बन्धश्च क्रियायामेव भवति । यावादिव् शब्दानां सर्वनामविकल्पस्वर्गवाचिनां क्रियावाचकत्वाभावात् धातुत्वेऽपि दोषो नास्ति, क्रियावाचकत्वाभावेन तव्यदादीनामनुत्पत्तेः ।

तव्यदादीनामनुत्पत्तावपि या इत्यस्य धातुसंज्ञायाम् "आतो धातोः" इति लोपः प्रसज्येत । न च स्त्र्यर्थनिमित्तकत्वेन आत्वस्य बहिरङ्गसिद्धत्वम् । विभक्तिनिमित्तकत्वेन भसंज्ञानिमित्तकत्वेन लोपस्य ततोऽपि बहिरङ्गत्वात्। अर्थकृतबहिरङ्गत्वस्य अनाश्रयणाच्च। प्रतिपदोक्तपरिभाषयापि न निस्तारः। नकारजावनुस्वारपञ्चमौ झलि धातुषु । सकारज इत्यभियुक्तोक्त्या तस्याः परिभाषाया धातुसंज्ञाया-मनाश्रयणात् । अत्र "आतोऽनापः" इति आबन्तस्य लोपप्रतिषेधान्न दोषः ।

एवं तर्हि वा शब्दस्य अधातुरिति प्रातिपदिकसंज्ञाप्रतिषेधः प्राप्नोति । एवञ्च अप्रातिपदिकत्वात् सुबुत्पत्तिर्न स्यात् । नैष दोषः, निपातस्य अनर्थकस्य प्रातिपदिकसंज्ञा चोदिता । तत्र अनर्थकग्रहणं न करिष्यते । निपातः प्रातिपदिकम् इत्येव ।

अस्य तर्हि दिव् शब्दस्य प्रातिपदिकसंज्ञाप्रतिषेधः प्राप्नोतीत्युच्येत तस्यापि समाधानम् एवं भवितुमर्हति । यदसौ भगवान् सूत्रकारः "दिव औत्" इत्यनेन दिवः औत्वं विधत्ते तेन ज्ञायते दिव् शब्दस्य प्रातिपदिकत्वं वर्तते इति । इदं ज्ञापकं न संगच्छते – तथा हि – अक्षेण दीव्यतीति विग्रहे क्विपि ऊठि अक्षद्यूशब्दः । तस्य च कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमित्यनेन कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञा भवति । तत्र च दिव औत् इत्यस्य चरितार्थ्यं वर्तते इति ज्ञापकत्वं न संघटते । एवं च इष्टं च न सिध्यति अनिष्टं च प्राप्नोति इति दिव् इत्यस्य धातुसंज्ञा दुर्वारा इति । ननु "अननुबन्धकग्रहणे न सानुबन्धकस्य" इत्यनेन सानुबन्धकस्य भ्वादिगणपठितस्य दिवु इत्यस्य "दिव औत्" इति औत्वं न भवति इति चेत् , एवमपि अननुबन्धको दिव् शब्दो नास्तीति कृत्वा सानुबन्धकस्य ग्रहणं विज्ञायते । उभयसंभवे हि अस्याः परिभाषायाः प्रवृत्तिः, नान्यथा । एवं सति "दिव औत्" सूत्रं ज्ञापकं न भवतीति, दिव् इत्यस्य धातुसंज्ञा प्रवर्तत इति दोष एव । समान शब्दानां प्रतिषेधो वक्तव्य इति।

परिमाणग्रहणं च कर्तव्यम् , विशिष्टावधिपरिच्छिन्नस्य धातुसंज्ञा विधेया, गणे च "भ्वेधस्पर्धगाधृ-बाधृनाथृनाधृ" इत्यादिरूपेण पठ्यन्ते । भू इत्यस्यैव धातुसंज्ञा न पुनर्भ्वेध इत्यस्य इत्यत्र मानाभावात् । अर्थनिर्देशोऽपि न मानम् तस्य आधुनिकत्वात् , सेधतेर्गतावित्यनेन तस्य आधुनिकत्वस्य ज्ञापनात् इति अयमपि दोषः ।

क्रियावचनो धातुरिति लक्षणं क्रियते । यदि तदानीं समानशब्दस्य प्रतिषेधोऽपि न वक्तव्यः परिमाणग्रहणं च न कर्तव्यम् । भ्वेधशब्दस्य क्रियावाचकत्वं नास्ति । क्रिया नाम का ? इति चेत् "क्रिया नामेयम् अत्यन्ताऽपरिदृष्टाऽशक्या पिण्डीभूता निदर्शयितुं । यथा गर्भो निर्लुठितः सा अनुमानगम्या इति भाष्यम् । आख्यातपदवाच्या क्रिया साध्यमानावस्था पूर्वापरीभूतावयवा भूतभविष्यद्वर्तमानसदसदवयव-समूहरूपा सद्वस्तुविषयेन्द्रियग्राह्या न भवति ।

तदुक्तं हरिणा –

गुणभूतैरवयवैः समूहः क्रमजन्मनाम् ।
बुद्ध्या प्रकल्पिताऽभेदः क्रियेति व्यपदिश्यते ॥

यावत् सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते ।
आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते ॥ इति ।

सर्वेषु साधनेषु संनिहितेषु यदा पचतीत्येतत् भवति सा क्रिया । अथवा यया देवदत्तः इह भूत्वा कालान्तरे पाटलिपुत्रे भवति सा क्रिया । अनेन च क्रियायाः विद्यमानत्वं प्रत्यक्षागम्यत्वम् अनुमानगम्यत्वं च प्रतिपादितम् । देशान्तर प्राप्तिलक्षणेन कार्येण क्रियाख्यं कारणमनुमीयते । अनुमानं च विक्लुत्यादिफलं कारणजन्यं कार्यत्वादिति ।

संबन्धग्रहणाभावात् कथं क्रियाविषयकमनुमानं सेत्स्यति इति चेत् – धातुवाच्यस्य क्रियावयवसमूहस्य युगपदसन्निधानादप्रत्यक्षत्वेपि पच् धात्वर्थक्रियावयवस्य क्षणस्य प्रत्यक्षत्वेन तान् क्षणान् बुद्ध्या संकलय्य पचतीति प्रयुज्यते । क्रियाक्षणस्य अधिश्रयणादेः प्रत्यक्षत्वात् अनुमानं सिद्धम् ।

कथं ज्ञायते क्रियावचनो धातुरिति इत्याशङ्कायामुच्यते, सर्वेषां धातूनां क्रिया सामानाधिकरण्यात् । किं करोति पचति, किं करिष्यति पक्ष्यति, किमकार्षीत् अपाक्षीत् इत्यादिना सामान्य विशेष भावेन सर्वैः धातुभिः करोतेरन्वयात् ।

एवं तर्हि अस्ति भवति विद्यतीनां धातुत्वं न स्यात् , करोतिना सामानाधिकरण्याभावात् । किंकरोति इत्यस्य अस्ति इति प्रतिवचनं नास्ति । एवमेव विद्यते भवति इत्यपि न । एवञ्च कृत्वा इदं न संघटते इति चेत् , तर्हि भाववचनो धातुरिति लक्षणं क्रियते । भावशब्दः क्रियासामान्यवचनः । यस्य च भावेन भावलक्षणम् , भावे, इत्यादिषु भावशब्दस्य क्रियासामान्यवाचित्वात् । अस्मिन् मते पचादीनाम् , अस्ति भवति विद्यतीनां च धातुसंज्ञा सिद्ध्यति ।

पचादीनां अस्तिभवतिविद्यतिभिः सामानाधिकरण्यात् पचादयः भाववचना इति ज्ञायते । भवति पचति, भवति पक्ष्यति, भवति अपाक्षीत् इति भवतिसामानाधिकरण्यम् ।

आत्मभरणवचनो भवतिः । तच्चात्मभरणम् आषष्ठाद् भावविकारादनुस्यूतं सदिति प्रत्ययवेद्यं रूपम् । तच्च केवलान्वयित्वात् पदार्थमात्रसमानाधिकरणम् । एवं चाश्रये पचिक्रियाबोधे तत्समानाधिकरणात्मभरणस्यापि तत्र सत्वेन तद्वाचकत्वं पचादीनाम् । यथा शुक्ले गुणे रूपत्वसत्तामात्रेण रूपवचनत्वं शुक्लादीनां, तद्वत् भाववचनत्वम् पचादीनाम् ।

यदि भवनं भावः तर्हि भेदः छेदः इत्येवं विप्रतिषिद्धवचनानां धातुसंज्ञा न सिद्ध्यति । भेदेन छेदेन अभावः प्रतीयते न तु भावः । किंच यथा करोतिः पचादीनां सर्वान् कालान् , सर्वान् पुरुषान् , सर्वाणि वचनान्यनुवर्तते तथा न भवतिः । भवतिः पुनः वर्तमानकालं च एकत्वञ्च । किञ्च यथा पचतिकरोत्योः सामान्यविशेषभावः प्रतीयते । तद्वत् पचति – भवत्योः सामान्यविशेषभावः न प्रतीयते । एवं तर्हि कः सम्बन्धः पचति भवत्योः इति चेत् तत्राह भगवान् भाष्यकारः – "कातर्हीयं वाचोयुक्तिः" – भवति पचति, भवति पक्ष्यति, भवति अपाक्षीत् इति । एषैषा वाचोयुक्तिः – पचादयः क्रियाः भवति क्रियायाः कर्त्र्यो भवन्ति इति। भवतिपचत्योः कर्तृकारकभावः सम्बन्धः। भवति पचतीत्यत्र एकाश्रयकपाकानुकूलवर्तकालिकक्रियाकर्तृकसत्ता इति बोधः । तथा पक्ष्यति भवतीत्यत्र एकाश्रयकभविष्यत्कालिकविक्लृत्त्यनुकूलव्यापारकर्तृका सत्ता इति बोधः ।

ननु पक्ष्यति भवति इति कथं प्रयोगः, भविष्यत्कालिकपाके वर्तमानकालिकसत्तायाः असंभवात् इति चेत् भूतभविष्यतोरपि सूक्ष्मावस्थामालम्ब्य वर्तमानकालिकसत्तायाः सत्वात् ।

ननु अन्यत्राभिहितम् – "तिङभिहितो भावः क्रियया समवायं न गच्छति, न हि भवति, पचति पठतीति" । एवं च कथं पचतिभवत्योः, साध्यसाधनभावेन अन्वयः – इति चेत् , आख्यातवाच्यक्रियया कर्तृकर्मभावेन क्रिया सम्बध्यते एव । कर्तरि "पचति भवती"ति उदाहरणं दत्तम् । कर्मणि तु

"पश्य मृगो धावती"ति उदाहरणम् – अस्य च मृगाभिन्नैककर्तृकवर्तमानकालिकशीघ्रगत्यनुकूल व्यापारनिष्ठकर्मतानिरूपकं यत् ज्ञानं तदनुकूलः यत्किंचित्कर्तृकप्रेरणाविषयीभूतः व्यापारः इति बोधः । अत्र गत्यनुकूलव्यापारस्य दृशिक्रियायां कर्मतासम्बन्धेन अन्वयः न विरुद्धः ।

अस्तु नाम अस्तिभवतिविद्यतिषु साध्यसाधनभावेन परस्परं अन्वयः । अथापि पचत्यादीनां करोतिवत् अस्त्यादिसामानाधिकरण्यं नास्ति खलु इति चेत् , भावशब्दः कर्तृसाधनः, भवतीति भावः इति। एवं सति विप्रतिषिद्धवाचकानां भिद् छिद् नश् प्रभृतीनाम् अपि क्रियात्वं सिध्यति, नाशोपि भवतीति कृत्वा ।

एवं तर्हि वृक्षोपि भवति प्लक्षोपि भवतीति वृक्षप्लक्षशब्दयोरपि भाववचनत्वेन धातुत्वं स्यादिति दोषः इति चेत् , एवं तर्हि भाव्यते इति भावः इति भवतेर्ण्यन्तात् कर्मणि घञ् भवति । तेन साध्यमानार्थवाचिनाम् धातुसंज्ञा सिध्यति । स्वभावसिद्धं तु द्रव्यं, तस्य धातुसंज्ञा न भवतीति इष्टं सिध्यति इति चेत् , पुत्रोत्पादनेन मातृत्वं पितृत्वं च भाव्यत इति एतयोः शब्दयोरपि धातुत्वं स्यादिति अस्मिन् पक्षे दोषः ।

एवञ्च पाठाश्रये समानशब्दानां धातुत्वप्रसङ्गः, क्रियावाचको धातुरित्युक्ते अस्तिभवतिविद्यतीनां धातुत्वाप्रसङ्गः, भाववचनो धातुरित्युक्ते कर्तृसाधने वृक्षादीनां धातुत्वप्रसङ्गः, कर्मसाधने मात्रादीनां धातुत्वप्रसङ्गः, एतेषु मतेषु आणवयति वट्टयति इत्यादीनां च धातुत्वप्रसङ्ग इति महान् दोष इति चेत् , भूवादिसूत्रेणैव सर्वेष्टसिद्धिर्भवतीति क्रियावचनो धातुः भाववचनो धातुरिति वा न कर्तव्यम् ।

तथा हि – अयमादिशब्दो अस्त्येव व्यवस्थायाम् । तद्यथा देवदत्तादयः आनीयन्तामिति उक्ते देवदत्तप्रभृतयः आनीयन्ते । एवम् आदिशब्दः प्रकारेपि, यथा – देवदत्तादयः आढ्या अभिरूपाः पक्षवन्तः इति । देवदत्तप्रकारा इति गम्यते । भूवादयः इत्यत्र भूवाशब्दयोः प्रत्येकं आदिशब्दः परिसमाप्यते । भू आदयः वा आदयः इति । आद्यः आदिशब्दः व्यवस्थायाम् । द्वितीयः प्रकारे । एवं च भूप्रभृतयो वासदृशा धातवः इति लभ्यते । एवञ्च इदानीं भूवादीनां पाठात् आणवयत्यादीनां क्रियावाचकत्वेपि धातुसंज्ञा न भवति । स्वरानुबन्धज्ञापनाय च भ्वादीनां पाठः आवश्यकः ।

शिष्टप्रयोगात् आणवयत्यादीनां निवृत्तिरिति तु वक्तुं न शक्यते । इदानींतनकाले शिष्टानामल्पत्वात् । किञ्च लक्ष्यैकचक्षुषां पाणिन्यादीनां कृते शिष्टानां प्रामाण्येपि लक्षणैकचक्षुष्कानां सामान्यजनानां गणपाठः एव गतिः इति सर्वं समञ्जसम् ।

# महाभाष्यानुसारेण वर्णसमाम्नाये जातिपक्षावश्यकताविचारः

## “अइउण्” (१. मा. सू.)

**विद्वान् चिन्तलपाटि पूर्णानन्दशास्त्री, नेल्लूरु**

ॐ नमः पाणिनिकात्यायनपतञ्जलिभ्यः शब्दविद्यासम्प्रदायकर्तृभ्यः परामर्षिभ्यो महद्भ्यो गुरुभ्यः ।

**१. “अ इ उ ण्” १. मा. सू.** – अस्मिन्सूत्रे अकारः लण् सूत्रे णकारेण सहितः, आदिरन्त्येन सहेतेति सूत्रेण अण् इति प्रत्याहारसंज्ञां लभते । एवम् “ऐ औच्” सूत्रे चकारेण सहितः “अच्” इति, “ऋलृक्” सूत्रे ककारेण सहितः “अक्” इति च व्यवह्रियते ।

एतेषु प्रत्याहारेषु अकारमारभ्य णकारचकारादिपर्यन्तं मध्ये उपदिष्टैः इकारादिभिः स्वेन अकारेण च स्वसवर्णाः दीर्घाः, प्लुताश्च गृह्यन्ते इति “अणुदित्सवर्णस्य चाप्रत्ययः” इति सूत्रेण बोधितम् तेन “अकस्सवर्णे दीर्घः” इत्यादावक्पदेन आकारादीनामपि ग्रहणात् दुर्गा + आलयः = दुर्गालयः, लक्ष्मीशः इत्यादावपि दण्डाग्रम् , हरीन्द्रावित्यादाविव सवर्णदीर्घादिः सिद्ध्यतीतीष्टसिद्धिः ।

**२. शङ्का** – परन्तु प्रत्याहारमद्वारीकृत्य साक्षात् लक्ष्ये शास्त्रप्रवृत्तिबोधकानुवृत्तिनिर्देशस्थले अस्यच्वौ यस्येतिचेत्यादिसूत्रे ककारचकारादेः प्रत्याहारलिङ्गस्याऽभावात् तत्राकारादिः अक्प्रत्याहारादिषु स्थित इति ज्ञातुमशक्यत्वेन अण्त्वानिश्चयात् अणुदित्सूत्राऽप्रवृत्त्या ह्रस्वाकारस्थले शुक्लीभवति कृष्णीभवतीत्यादावेव ईत्वं स्यात् मालीभवति शालीभवतीत्यादौ न स्यादिति वर्णानामेकत्वमिति धिया व्यक्तिपक्षे शङ्का जाता ।

**३. उत्तरम्** – अस्याश्शङ्काया इदमुत्तरमादौ वर्णैकत्ववादिना सिद्धान्तिनोक्तम् । “एकत्वादकारस्य-सिद्धम्” – इति वार्त्तिकेन – “अयमस्याशयः अक्षरसमाम्नाये, अनुवृत्तौ, धात्वादिषु च दृश्यमानः अकारः एक एव न तु वस्तुतः भिन्नः । उदात्तोऽकारः अनुदात्तोकारः अनुनासिकः निरनुनासिकः इत्यादिः भिन्नतया दृश्यमानो व्यवहारस्तु व्यञ्जकध्वनिभेदेन कल्पितः, यथा एकस्यैव मुखस्य मणौ कृपाणे तैले च, तदाकारानुगुण्येन भिन्नतया दीर्घह्रस्वत्वादिभिः प्रतिभासः तथा” – इति ।

**४. पूर्वपक्षः** – ननु वर्णानामेकत्वे, “कर्मण्यण्” , “आतोऽनुपसर्गे कः” “चरेष्टः” इत्यादिभिरुक्तेषु प्रत्ययेषु–णकार–ककार–टकार–रूपानुबन्धभेदेऽपि अकारस्यैकत्वात् कप्रत्ययेऽपिणित्वस्य प्रसक्त्या णित्कृत्परत्वात् “आतोयुक्चिण्कृतोः” – इति युगागमेन “गोद” इतीष्टं रूपं न सिद्ध्येत् , स्त्रियाञ्चाणणन्तत्वात् “टिड्ढाणञि”त्यादिना ङीपि, “गोदा” इति न स्यात् । यदि तु “इह मुण्डी भव” “इह जटिलो भव” “इह शिखी भवे”ति प्रभुणा आज्ञप्तो चारः यथा “यल्लिङ्गो यत्रादिष्टः – तल्लिङ्गस्तत्रोपतिष्ठते” – तथा कित्वेनादिष्टो णित्वकार्याणि न करोति णित्वादिनोपदिष्टो न कित्वादिकार्याणि च करोतीति अनुबन्धसङ्करो वार्यते, तथापि वर्णानामेकत्वे किरिणा, गिरिणा

इत्यादावेकस्यैव इकारस्योभयत्र सत्वेन वस्तुतः एकाच्त्वात् ''सावेकाचः''– इत्यादिना उदात्तस्वरापत्तिः स्यात् । घटिक इत्यादौ च एकस्यैवाकारस्योभयत्र सत्वेन द्व्यच्कत्वाभावात् नौद्व्यच इति ठंश्च न स्यात् । यद्यपि अत्रापि ''सप्तदशसामिधेन्यो भवन्ती''ति न्यायेन आवृत्तेरपि संख्यानेन धटिक इत्यादावनेकाच्त्वं सिद्ध्यति, ''ऋषिसहस्रमेकां कपिलामेकैकश'' इत्यादिन्यायेन गौण्या अप्युत्तरसंख्याया एव प्राबल्याश्रयणेन ''किरिणा'' इत्यादावनेकाच्त्वस्यैव स्वीकारेण उदात्तस्वरापत्तिश्च वार्यते, तथापि यथा एकेन घटेन नानेको युगपत् जलाहरणादिकार्यं कुर्यादेवमेकमकारमनेको युगपत् नोच्चारयेत् । न च यथा एकस्य घटस्य युगपदनेकैर्दर्शनं स्पर्शनञ्च क्रियते तथा एकस्य वर्णस्यानेकैः युगपदुच्चारणमपि संभवत्येवेति वाच्यम् । तथापि वर्णानामेकत्वमिति पक्षस्य उपपत्तेरेवाभावात् – तथा हि – एकस्य व्यक्तिविशेषस्य युगपत् भिन्नदेशे अवस्थितिः न युज्यते यथा एको देवदत्तः युगपत् स्रुघ्नदेशे मथुरायाञ्च न दृश्यते, अकारस्य तु अर्कः अश्वः इत्यादिषु पृथक्स्थलेषु युगपदनेकैरुच्चारणं भवतीति दृष्टान्तवैषम्यात् अकारादीनां नानात्वमेवाङ्गीकरणीयम्।

किञ्च दण्डाग्रमित्यादावेकस्यैवाकारस्य दकारात् उत्तरकाले डकारादुत्तरकाले च स्थितिः पुनः तस्यैव अग्रशब्दे उपलब्धिरिति कालेन व्यवधानमुच्चारणे दृश्यते, एवम् कृतिरित्यादौ ऋकारस्य इकारस्य च भिन्नयोरचोर्मध्ये तकारेण व्यवधानमिव भिन्नयोरेव वर्णयोःमध्ये शब्दान्तरेण व्यवधानमङ्गीकरणीयम् न तु एकस्य । अर्कः अश्वः इत्यादौ तु एकस्यैवाकारस्य रेफककारादिनाव्यवधानं दृश्यमानं नानात्वपक्षे एव संभवति । अतः देशव्यवायात् कालव्यवायाच्च अकारादीनामान्यभाव्यमेव – इति पूर्वपक्षः ।

**५. सिद्धान्तस्तु** – आकृतिग्रहणात्सिद्धमित्यादिवार्तिकत्रयेण जातिपक्षमाश्रित्य निरूपितः। तथा हि, अकारादिराक्षरसमाम्नायिकः, प्रत्याहारस्थः, अनुवृत्तिनिर्देशस्थः, धात्वादिस्थश्च सर्वोपि जातिबोधक एव स्वीक्रियते अवर्णाकृतिरुपदिष्टा सर्वमवर्णकुलं ग्रहीष्यति । एवञ्च अणुदित्सूत्रे अण्ग्रहणमपि न कर्तव्यमिति लाघवमप्यस्मिन् पक्षे । एवं जातिपक्षस्य अवश्यमाश्रयणीयता च अवात्तामित्यादौ ''झलो झलीति'' सिचस्सलोपार्था । अन्यथा वसधातोः कर्तरि लुङि तसि तामादेशे अडागमे च्लौ सिचि वदव्रजेतिवृद्धौ ''सःस्यार्धधातुके'' इति तत्वे अवात् स् तामित्यत्र वर्णानामनेकत्वे एकस्यैव तकारस्य झल्प्रत्याहारे पठितत्वेन अन्यस्य झल्त्वेनाग्रहणमिति झल्परत्वाभावात् लोपो न स्यात् ।

जातिपक्षस्वीकारे तु ''खफछठथे''त्यादि सूत्रे ''चटतव्'' इति तकारेण सर्वतकाराणामपि ग्रहणेन झल्त्वसिद्ध्या ''झलोझली''तिलोपेनेष्टसिद्धिः । एवं जातिपक्षेण सवर्णानां सर्वेषां ग्रहणमापद्येतेति तद्वारणायैव ''अच्च घेः'', ''इद्वृद्धौ'', ''ऋत उत्'' इत्यादौ ''तपरस्तत्कालस्ये''ति नियमप्रवृत्तये तपरकरणं कृतमुपपद्यते ।

अतः जातिपक्षे युगपदनेकैरुच्चारणस्य सम्भवात् भिन्नवर्णव्यवायेन भिन्नकालेन चोपलब्धेरुपपन्नत्वाच्च न दोषः । अनुवृत्तिनिर्देशस्थाकारेण दीर्घाणामपि ग्रहणात् शालीभवतीत्यादेरपि सिद्धिरित्यदोषः – इति ।

# द्विर्वचनेऽचि

**विद्वान् श्रीपाद सुब्रह्मण्यशास्त्री, भाग्यनगरी (हैदराबाद्)**

द्विर्वचने, अचि इति पदच्छेदः । अचः परस्मिन्निति सूत्रात् अचः इति, स्थानिवत्सूत्रात् स्थानिवत् इति आदेश इति च पदानि अनुवर्तन्ते । अचि योऽजादेशः स द्विर्वचने कर्तव्ये स्थानिवदिति सूत्रार्थः फलितः। चक्रतुः, चक्रुः इत्यादिरूपसिद्ध्यर्थमिदं सूत्रं प्रवृत्तम् । कृ + अतुस् इति स्थिते नित्यत्वात्प्रथमतः यणादेशे क्र् + अतुस् इति जाते इदानीं धातोरनच्कत्वात् द्वित्वं न प्राप्नोति । अतोऽत्र दोषवारणाय प्रकृतसूत्रेण स्थानिवत्त्वं विधीयते ।

सूत्रस्यास्य अर्थवर्णने पञ्च पक्षाः उपस्थापिताः महाभाष्यकारैः ।

(१) अचि योऽजादेशः स द्वित्वे कर्तव्ये स्थानिवत् ।
(२) अजादौ प्रत्यये योऽजादेशः स द्वित्वे कर्तव्ये स्थानिवत् ।
(३) द्वित्वनिमित्ते अचि योऽजादेशः स स्थानिवत् ।
(४) द्वित्वनिमित्ते अचि अच आदेशो न स्यात् ।
(५) द्वित्वनिमित्ते अचि योऽजादेशः स स्थानिवत् द्वित्वे कर्तव्ये इति वा द्वित्वनिमित्ते अचि अच आदेशो न भवति द्वित्वे कर्तव्ये इति वा सूत्रार्थः ।

अचि योऽजादेशः स द्वित्वे कर्तव्ये स्थानिवदिति प्रथमपक्षः । इदानीं कार्यातिदेशमाश्रित्य दोष उद्भाव्यते । "आदेशे स्थानिवदनुदेशात्तद्वतो द्विर्वचनम्" इति वार्तिकम् । स्थानिनि सति यत्कार्यं भवति तदादेशेऽपि भवतीति कार्यातिदेशस्यार्थः । वार्तिके तद्वत इत्यस्य आदेशवत इत्यर्थः । चक्रतुः इत्यादौ नित्यत्वात् द्वित्वात् पूर्वं यणादेशे एकाचो विधीयमानं द्विर्वचनमनच्कत्वादप्राप्तमिति स्थानिवत्त्वात् यणयुक्तस्यैव प्राप्नोति । "तत्राभ्यासरूपम्" इत्यनन्तरं वार्तिकम् । तथा च यण्वतो द्वित्वे अभ्यासे अकारश्रवणं न स्यात् । अत्र दोषपरिहाराय इदं वार्तिकम् – "अज्ग्रहणं तु ज्ञापकं रूपस्थानिवद्भावस्य" इति । द्विर्वचनेऽचीति सूत्रे अचीति पदं रूपस्थानिवद्भावस्य ज्ञापकम् । जेघ्रीयते, देध्मीयते इत्यादौ घ्रा + य इत्याद्यवस्थायां "ई घ्राध्मोः" इति सूत्रेण ईत्वे स्थानिवत्त्ववारणार्थं अचीति पदमुपात्तम् । यद्यत्र कार्यातिदेश एव स्वीक्रियते चेत् स्थानिकार्यातिदेशेऽपि घ्री इत्यस्यैव द्वित्वे जेघ्रीयते इत्यादि रूपसिद्धौ अचीति पदं व्यर्थमेव स्यात् । रूपातिदेशपक्षे तु ईकारे आकारत्वातिदेशे घ्रा इत्यस्यैव द्वित्वे जाघ्रीयते इत्यनिष्टं रूपं स्यात् । अतस्तद्वारणार्थं कृतमचीति पदं सार्थकम् । एवञ्च प्रकृते चक्रतुः इत्यादौ कृ + अतुस् इति स्थिते प्रथमतः यणादेशेऽपि प्रकृतसूत्रेण स्थानिरूपस्यातिदेशात् रेफे ऋत्वातिदेशे कृ इत्यस्यैव द्वित्वे चक्रतुरित्यादिरूपं सिद्ध्यति ।

"तत्र गाङः प्रतिषेधः" (वा) । रूपस्थानिवद्भावे अधिजगे इत्यादौ अधिपूर्वक इङ् धातोः लिटि तप्रत्यये एशादेशे अधि इ + ए इति जाते "गाङ् लिटि" इति सूत्रेण गाङादेशे अधि + गा + ए इति जाते इदानीं प्रकृतसूत्रेण स्थानिवत्त्वेन गाङि इत्वातिदेशे इकारस्य द्वित्वे अभ्यासे इकारश्रवणं स्यात् , अधिजगे इति रूपं न स्यादिति पूर्वपक्षः । तत्रेदं समाधानम् । गाङ् लिटीति सूत्रे ल् लिटीति द्विलकारको निर्देशः क्रियते । ल् इति लुप्तसप्तमीकम् । लादौ लिटीत्यर्थः । एवञ्च गाङादेशस्य अज्निमित्तकत्वाभावेन नाऽत्र स्थानिवत्त्वप्रवृत्तिः, न दोषः ।

अचि योऽजादेशः स द्वित्वे कर्तव्ये स्थानिवदिति पक्षे दोषप्रदर्शकं वार्तिकम् – "कृत्येजन्त दिवादि नामधातुष्वभ्यासरूपम्" इति । कृतधातोः णिचि लुङि, तिप्रत्यये, च्लौ, चङादेशे कृत् + इ + अ + त् इति स्थिते "उपधायाश्च" इति सूत्रेण इत्वे, रपरत्वे किर् + त् + इ + अ + त् इति जाते इदानीं इरादेशे स्थानिरूपातिदेशे ॠत्वातिदेशे कृत् इत्यस्यैव द्वित्वे अभ्यासे अकारश्रवणं स्यात् , इकारश्रवणं न स्यात् । एवं एजन्ते जग्ले, मम्ले इत्यादौ आदेच इत्याकारे ऐत्वातिदेशे अभ्यासे इकारश्रवणं स्यात् । एवं दिवादौ दुद्यूषति, सुस्यूषतीत्यादौ यणादेशनिष्पन्नयकारे इत्वातिदेशे दि इत्यस्यैव द्वित्वे अभ्यासे इकारश्रवणापत्तिः। एवं नामधातुषु बिभवनीयिषतीत्यादौ भवनीयेति क्यजन्तात् सनि बभवनीय + इस इति स्थिते इदानीं रूपस्थानिवद्भावेन भो इत्यस्यैव सन्यङोरिति द्वित्वे अभ्यासे उकारश्रवणापत्तिः ।

उपर्युक्तदोषवारणाय द्विर्वचनेऽचीति सूत्रे प्रत्यये इति योजयित्वा अजादौ प्रत्यये योऽजादेशः स द्वित्वे कर्तव्ये स्थानिवदित्युच्यते । अयं द्वितीयः पक्षः । एवमुक्तौ दोषप्रदर्शकं वार्तिकम् – "प्रत्यय इति चेत् कृत्येजन्तनामधातुष्वभ्यासरूपम्" इति । अस्मिन् द्वितीयपक्षे दिवादिषु दोषवारणेऽपि कृत्येजन्तनाम-धातुषु तु दोषः तदवस्थ एव ।

एवं तर्हि द्विर्वचननिमित्ते अचि योऽजादेशः स स्थानिवदिति तृतीयः पक्षः आश्रीयते । प्रोक्तचतुर्षु स्थलेषु तत्तदादेशस्य द्वित्वनिमित्ताजादिप्रत्ययनिमित्तत्वाभावान्न दोषः । निमित्तशब्दाभावेऽपि द्विर्वचननिमित्तार्थः लभ्यत एव । यथा दधित्रपुसं प्रत्यक्षो ज्वरः – ज्वरनिमित्तमिति गम्यते । अथवा द्विरुच्यते तस्मिन्निति द्विर्वचनमिति अधिकरणल्युडन्तत्वाश्रयणे, द्विर्वचनमस्मिन्नस्तीति द्विर्वचनमिति अर्शआद्यजन्तत्वाश्रयणे वा निमित्तार्थो लभ्यते ।

परन्तु तृतीयपक्षे द्विर्वचनशब्दस्य द्वित्वनिमित्ताच्परत्वात् , द्वित्वे कर्तव्ये इत्यर्थस्यालाभात् कियन्तं कालमसौ स्थानिवद्भवतीति न ज्ञायते । एवञ्च द्वित्वप्रवृत्त्यनन्तरमपि स्थानिवत्त्वप्रवृत्तौ चक्रतुरित्यादौ पुनर्यणादेशानापत्तिर्दोषः ।

एवं तर्हि प्रतिषेधः प्रकृतोऽनुवर्तिष्यते । द्वित्वनिमित्ते अचि अच आदेशो न स्यादिति सूत्रार्थः । अयं चतुर्थः पक्षः । अस्मिन् पक्षे स्थानिवदिति पदं नानुवर्तते । "न पदान्त" सूत्रात् नेति पदञ्चानुवर्तते । परन्तु अस्मिन् पक्षेऽपि तृतीयपक्षोक्त एव दोषः प्रसज्यते । न ज्ञायते क्रियन्तं कालमसौ आदेशो न भवतीति ।

अतस्तद्दोषवारणाय सिद्धान्तकल्पः पञ्चमः पक्षः आश्रीयते । अत्र भाष्यम् – “प्रत्ययश्च विशेष्यते द्विर्वचनञ्च” इति । प्रत्ययश्च विशेष्यते द्विर्वचनञ्च चिकीर्षितत्वेन निर्दिश्यते इति तस्य भाष्यस्यार्थः । द्विर्वचनेन प्रत्ययस्याक्षिप्तत्वात् तद्विशेषणं द्विर्वचनं द्वित्वनिमित्तवाचकम् । द्विर्वचनञ्च द्विर्वचनञ्च द्विर्वचनमिति एकशेषनिर्देशोऽयम् । द्वित्वे कर्तव्ये, द्वित्वनिमित्ते अजादौ प्रत्यये परे इत्यर्थद्वयमपि लभ्यते। एवञ्च द्वित्वनिमित्ताजादिप्रत्ययनिमित्तो योऽजादेशः स स्थानिवत् द्वित्वे कर्तव्ये इति सूत्रार्थः फलितः । इह निमित्तशब्देन साक्षात्परम्परासाधारणं प्रयोजकम् , न तु साक्षादेवेत्याग्रहः । तद्भावभावितामात्रेण निमित्तत्वस्य इहाङ्गीकारात् । अत एव चक्रतुः इत्युदाहरणसङ्गतिः । तत्र च चक्रतुरित्यादौ अजादिप्रत्ययस्य अतुसः यण्निमित्तत्वाभावः स्पष्ट एव । तत्राकारमात्रस्यैवाचः यण्निमित्तत्वात् । उक्तप्रकारेण निर्वचने च अतुसोऽपि परम्परया यणादेशनिमित्तत्वात् न कोऽपि दोषः ।

# अव्ययसंज्ञा

विद्वान् जि. महाबलेश्वरभट्टः, कल्याणनगरी (बेङ्गळूरु)

"स्वरादिनिपातमव्ययम्", "तद्धितश्चासर्वविभक्तिः", "कृन्मेजन्तः", "क्त्वातोसुन्कसुनः", "अव्ययीभावश्च" (१.१ – ३७, ३८, ३९, ४०, ४१) इत्यव्ययसंज्ञाविधायिकेयं पञ्चसूत्री । स्वर्, ततः, स्मारं स्मारं, गत्वा, उपकृष्णम् इत्यादीन्युदाहरणानि ।

(१) स्वरादिनिपातमव्ययमित्यत्र स्वरादिग्रहणं कुतः ? (२) कस्मादुभे संज्ञे क्रियेते निपातोऽव्ययश्चेति ? (३) अव्ययेभ्यः सप्तानामपि स्वादिविभक्तीनां त्रीणि वचनानि सम्भवन्ति, किमुतैकवचनमात्रं सम्भवति – इत्येते विचाराः संक्षेपेण निरूप्यन्ते ।

**१. स्वरादिग्रहणं कुतः ?**

अत्रेयमाशङ्का जागर्ति यत् "स्वरादिनिपातमव्ययम्" (१.१.३७) इति सूत्रे स्वरादिग्रहणं कुतः कृतमिति। अयमाशयः प्रष्टुः – "चादयोऽसत्त्वे" (१.४.५७) इति सूत्रेण निपातसंज्ञा विधीयते । चादिगणे एव पठ्यन्तां स्वरादयः । ततः स्वरादीनामपि भवति विहिता निपातसंज्ञा । निपातग्रहणेनैव स्वरादीनामपि सिद्धाव्ययसंज्ञेति कुतो वा "निपातोऽव्ययम्" इत्येवंप्रकारेण सूत्रं न प्रणीतं भगवता पाणिनिनेति । ["स्वरादि-निपातमव्ययम्" इत्यानुपूर्वीं स्मरता मया "निपातमव्ययमिति" कुतो न प्रणीतमित्यविचार्योक्तम्। परमपूज्यैः श्रीमज्जगद्गुरुभिः प्रबोधितोऽहं यत् निपातोऽव्ययमिति खलु पठनीयं, निपातशब्दस्य पुंस्त्वादिति । ] इदमत्र भवति समाधानम् । सम्प्रति चादिगणोऽन्यः स्वरादिगणश्चान्यः । उभयत्रापि सन्ति शब्दाः सत्त्ववाचिनोऽसत्त्ववाचिनश्चेति । किन्तु चादिगणे पठितानामसत्त्ववाचिना-मेवाव्ययसंज्ञेष्टा न सत्त्ववाचिनाम् । अत एव "लोधं नयन्ति पशु मन्यमानाः" इत्यत्र श्रूयमाणः सम्यगर्थावबोधकः पशुशब्द एव प्राप्नोत्यव्ययसंज्ञां, न तु, "पशूँस्ताँश्चक्रे वायव्यान्" इत्यत्राकर्ण्यमानः गवाद्यर्थवाचकः पशुशब्दः । स्वरादिगणे पठितानान्तु सत्त्ववाचिनामसत्त्ववाचिनाञ्च इष्यतेऽव्ययसंज्ञा । चादिगणे स्वरादिमन्तर्भाव्य निपातसंज्ञाञ्च स्वरादेर्विधाय निपातोऽव्ययमिति विधीयेताव्ययसंज्ञा तर्हि असत्त्ववाचिनामेव स्वरादिगणपठितानामव्ययसंज्ञा स्यात् न तु सत्त्ववाचिनां "स्वस्ति वाचयति", "स्वः पश्य" इत्यादौ स्वस्तिस्वःशब्दादीनाम् । "अनेकशक्तिदर्शनात् सत्त्ववाचित्वनिश्चयः स्वस्तिस्वःशब्दे" इति स्वरादिसूत्रे कैयटः । एवञ्च निपातोऽव्ययमिति न्यासेन नेष्टसिद्धिरिति स्वरादिग्रहणं कर्तव्यमेव सूत्रे इति स्थितम् ।

**२. कस्मादुभे संज्ञे क्रियेते निपातोऽव्ययश्चेति ?**

अष्टाध्याय्यां प्रथमाध्याये प्रथमपादे पंञ्चसूत्र्या विधीयते अव्ययसंज्ञा । प्रथमाध्याये चतुर्थपादे बहुसूत्र्या क्रियते निपातसंज्ञा । लाघवेन शास्त्रार्थप्रवृत्त्यर्थं संज्ञाकरणम् । अतो बहुकृत्वः कथयति भगवान् भाष्यकारः – "लघ्वर्थं हि संज्ञाकरणमि"ति । एवं स्थिते अव्ययसंज्ञया निपातसंज्ञया वा शास्त्रं

प्रवर्तयितुं चेत् शक्नुयाम किमर्थं महता यत्नेन द्वाभ्यां संज्ञाभ्यां व्यवहरेम । तथा हि – अव्ययसंज्ञाविधायिनीं पञ्चसूत्रीं प्रथमपादादुत्कृष्य चतुर्थं पादं नयामः । तत्रेत्थं पठामः –

१) प्राग्रीश्वरान्निपाताः, प्राग्रीश्वरादव्ययानि इति वा । ततः
२) स्वरादीनि
३) तद्धितश्चासर्वविभक्तिः
४) कृन्मेजन्तः
५) क्त्वातोसुन्कसुनः
६) अव्ययीभावश्च
७) चादयोऽसत्त्वे
८) प्रादयः
९) उपसर्गाः क्रियायोगे ... इति ।

ननु – एवं पाठमाश्रित्य निपातसंज्ञामात्रमुररीक्रियेत तदा स्वरादीनां शिरस्यपि निपातसंज्ञा निपतिता भवति । स्वरादिषु "किमोऽत्" (५.३.३२), "दक्षिणादाच्" (५.३.३६) इति सूत्राभ्यां विहितावेकाचौ तद्धितौ पठितौ विद्येते । अनयोरपि निपातसंज्ञाया इदानीं सत्त्वात् "निपात एकाजनाङ्" (१.१.१४) इति सूत्रेण विधीयमाना प्रगृह्यसंज्ञा प्रवर्तेत । ततश्च "क्व + अत्र = क्वात्र" इत्यादौ सवर्णदीर्घो न प्रवर्तेत किन्तु प्रकृतिभावः पदं निदधीतेति चेत् – अत एतादृशदोषपरिहाराय "निपात एकाजनाङ्" (१.१.१४) इति सूत्रे निपातपदं परित्यज्य चादिरिति पदं संयोज्य "चादिरेकाजनाङ्" इति पठामः । विभजामश्च "चादयोऽसत्त्वे" (१.४.५७) इति योगं "चादयः" "असत्त्वे" इति । चादयो निपातसंज्ञाः स्युरिति चादय इति सूत्रस्यार्थः । "असत्त्वे" इति तु पाठविशेषणार्थम् । अत इह शास्त्रे चादयोऽसत्त्वे ज्ञेया इति "असत्त्वे" इति सूत्रस्यार्थः । एवं योगं विभज्य व्याख्यानेन इहाष्टाध्याय्यां यत्र यत्र चादिग्रहणं तत्र सर्वत्रासत्त्ववाचिनामेवोपस्थित्या भूयते ।

ननु चादिरेकाजनाङ् इति प्रणयनेनैव "क्वात्र" इत्यादौ न प्रसक्तिर्दोषस्येति कुतो वा योगं विभज्य पूर्वोक्तोऽर्थः समुपवर्ण्यते इति चेत् ? सत्यं "क्वात्र" इत्यादौ नास्त्यवसरो दोषस्य । किन्तु "ए + अव = एऽव" इत्यत्र प्रगृह्यसंज्ञा प्रवर्तेत या सर्वथा नेष्यते । तथा हि – अस्य अपत्यम् इः = मदनः। तस्य सम्बुद्ध्यन्तः शब्दः "ए" इति । अयं सत्त्ववाचीत्यत्र नास्ति सन्देहः । "ए" इति सम्बोधनार्थकं विद्यते किञ्चिदव्ययम् । यस्यास्य चादिगणे पठितेन "उपसर्गविभक्तिस्वरप्रतिरूपकाश्च" इति गणसूत्रेणाव्ययसंज्ञा विहिता । नास्त्यस्य स्वरप्रतिरूपकस्य एकारस्य सत्त्ववाचित्वम् । अत "ए अक्षरचण" इत्यादौ प्रगृह्यसंज्ञायाः प्रवृत्तिरिष्टा । इयं व्यवस्था यथान्यासपक्षे भवति निपातसंज्ञायाः असत्त्ववाचिष्वेव प्रवर्तनात् । चादिरेकाजनाङ् इति न्यासे तु सत्त्वासत्त्ववाचिन्या ए इत्यानुपूर्व्याश्चादिगणे सद्भावात् प्रगृह्यसंज्ञा प्रवर्तेतैव । "असत्त्व" इति निपातसंज्ञायाः विधायकसूत्रे एव श्रुतत्वान्न तु

प्रगृह्यसंज्ञायाः । अतोऽसत्त्व इति योगं विभज्य चादिग्रहणं यत्र, तत्र असत्त्ववाची चादिर्ग्राह्य इत्येषोऽर्थः समुपवर्णितः ।

एवञ्चाव्ययसंज्ञाविधायकानि सूत्राणि निपातसंज्ञास्थलं नयामः । आश्रयामस्तत्र निपाताव्यययो-रन्यतरं शब्दम् । "निपात एकाजनाङ्" (१.१.१४) इत्यस्य स्थाने "चादिरेकाजनाङ्" इति पठामः । विभजामः "चादयोऽसत्त्व" इति योगम् । असत्त्व इति चादिपाठविशेषणं कुर्मः । व्यवहरामश्च विधिप्रदेशे निपाताव्यययोः अन्यतरेण शब्देनेति कुतः संज्ञयोर्द्वयोः करणं निपातोऽव्ययञ्चेति ?

इदमत्र समाधानम् । न व्येति = विविधं विकारं न गच्छति = सत्त्वधर्मान् लिङ्गसंख्याकारकादीन् न गृण्हाति इत्यन्वर्थसंज्ञाविज्ञानाय अव्ययसंज्ञावश्यमङ्गीकरणीया । तेन "अत्युच्चैसौ, अत्युच्चैस" इत्यादौ उपसर्जनस्थले प्रतिषेधो न वक्तव्यो भवति सत्त्वधर्माणां सद्भावात् । न च गणे पठित उच्चैःशब्द एवेति तदन्तस्याव्ययसंज्ञायाः प्राप्तिरेव नास्तीति कुतो निषेधस्यावसर इति वाच्यम् । अन्वर्थसंज्ञाबलादेव तदन्तस्यापि संज्ञाया ज्ञापनात् । तेन "परमोच्चैः" इत्यादौ तदन्तस्यापि सिद्धाव्ययसंज्ञा । एवमन्वर्थसंज्ञास्वीकारात् तदन्तविधौ सर्वनामाव्यययोरुपसंख्यानं कर्तव्यमित्यर्थस्य प्रतिपादकं "प्रयोजनं सर्वनामाव्ययसंज्ञायाम्" इति वार्तिकं, "उपसर्जनस्य नेति प्रतिषेधो भविष्यति" इति च नारम्भणीयं भवति। अतस्तदन्तस्य संज्ञासिद्धये, प्रतिषेधाय चोपसर्जनस्येयमन्वर्थिकाव्ययसंज्ञारम्भणीया । आश्रयणीया च निपातसंज्ञा "निपाता आद्युदात्ताः" (फि. सू. ४–८०)इति फिट् सूत्रस्य विषयविभागाय । अन्यथा स्वरादीनामप्याद्युदात्तताप्रसङ्गः । अतो भगवान् पाणिनिर्द्वाभ्यां संज्ञाभ्यां व्यवजहार ।

यदि पाणिनीयेषु सूत्रेषु संज्ञयैकयैव पूर्वोक्तरीत्या सर्वेष्टसिद्धिः भवतीति आगृह्णीध्वे, अध्यवसायश्चार्थस्य निपातशब्दस्यान्यत एव भवति फिट् शिट् नणादिशब्दानामिवेति मन्यध्वे तर्ह्यन्वर्थकाव्ययसंज्ञयैव निर्वाह इति हातुं शक्या निपातसंज्ञेति जानीध्वमिति शब्दकौस्तुभे दीक्षिता आहुः ।

**३. अव्ययेभ्यः सप्तानामपि विभक्तीनां त्रीणि वचनानि, किमुत एकवचनमात्रम् ?**

औत्सर्गिकेण सूत्रेण विहितानां सुबन्तानां "कर्मणि द्वितीया" (२.३.२) इत्यादिसूत्रेण नियमः क्रियते। द्विविधो नियमः । अर्थनियमः प्रत्ययनियमो वेति । प्रकृतार्थापेक्षः सामान्यापेक्षो वेति प्रत्ययनियमोऽपि द्विविधः। एवञ्च अर्थनियमः, प्रकृतार्थापेक्षः प्रत्ययनियमः, सामान्यापेक्षः प्रत्ययनियमश्चेति त्रयः पक्षाः ।

(१) अर्थनियमपक्षे वक्ष्यमाणप्रकारेणार्थो वर्ण्यते । कर्माद्यर्थयोग्यप्रातिपदिकाच्चेत् कर्मणि विभक्तिः तदाद्वितीयैव । कर्मादिरहिते तद्योग्यप्रातिपदिकात् प्रथमैवेति । पक्षेऽस्मिन् नियमनादर्थस्य अनियमनाच्च विभक्तीनाम् अव्ययेभ्यः सप्तानामपि विभक्तीनां त्रीणि वचनानि सम्भवन्ति ।

(२) प्रकृतार्थापेक्षप्रत्ययनियमपक्षेऽर्थवर्णनं भवत्येवम् । कर्माद्यर्थप्रातिपदिकाच्चेत् द्वितीया तदा कर्मण्येव न करणादौ । कर्मादियोग्ये तद्रिहितप्रातिपदिकार्थ एव प्रथमा, न कर्मादाविति । एतस्मिन् पक्षेऽपि सप्तानामपि विभक्तीनां त्रीणि वचनानि प्राप्नुवन्त्येव । न करणादावित्यनेन कर्मातिरिक्तकरणादि-कारकेष्वेव द्वितीयायाः निषेधात् । न ह्यव्ययेष्वस्ति कारकता ।

(३) सामान्यापेक्षप्रत्ययनियमपक्षे त्वित्थं समुपवर्ण्यतेऽर्थः । प्रातिपदिकाच्चेत् द्वितीया तदा कर्मण्येव नान्यत्र । प्रातिपदिकाच्चेत् प्रथमा तदा कर्मादियोग्यतद्विहितप्रातिपदिकार्थे एवेति । पक्षेऽस्मिन् विभक्तीनां प्राप्तिरेव नास्त्यव्ययेभ्यः । कर्माद्यर्थे एव तत्तद्विभक्तीनां नियतत्वात् । अव्ययार्थे कस्या अप्यविधानात् । अतोऽव्ययादाप्सुपः (२.४.८२) इति ज्ञापकात् सर्वासां सुब्विभक्तीनां प्राप्तिर्वक्तव्येति अत्रापि पक्षे सप्तानां त्रीणि वचनानि स्युरिति । ननु पक्षत्रयेऽपि समानस्थितिरिति सप्तानां विभक्तीनामेकवचनमात्रमिति पक्षस्योत्थितिः कथमिति चेत् ? इदमत्र समाधानमुच्यते । सम्प्रति तु सूत्रविन्यास इत्थमस्ति । "बहुषु बहुवचनम्" (१.४.२१) "द्व्येकयोर्द्विवचनैकवचने" (१.४.२२) इति । किन्तु योगौ विभज्य एवं सूत्रन्यासः क्रियते "द्विबह्वोर्द्विवचनबहुवचने" "एकवचनम्" इति । एवं विन्यासे एकग्रहणं न कर्तव्यमिति लाघवमप्यस्ति । द्वित्वे द्विवचनं बहुत्वे बहुवचनं च प्रवर्तेते । द्वित्वबहुत्वयोरभावे एकवचनं कर्मादौ स्वयं सिद्धमिति "एकवचनम्" इति सूत्रं कर्माद्यभावेऽप्यव्ययेष्वेकवचनस्य विधानार्थं प्रवर्तते । विनिगमनाविरहात् सर्वासां विभक्तीनामेकवचनमनेन "एकवचनम्" इति सूत्रेण विधीयत इति सप्तानामपि विभक्तीनामेकवचनमात्रमिति पक्षस्योत्थितिः । एतत्सर्वम् – "एकवचनम् उत्सर्गः करिष्यते । तस्य द्विबह्वोरर्थयोर्द्विवचनबहुवचने बाधके भविष्यतः" इति तद्धितश्चासर्वविभक्तिः (१.१.३८) इति सूत्रे स्थिताद्भाष्यादवगम्यत इति नागेशभट्टा आहुः ।

पूर्वोक्ताभ्यां पक्षाभ्यां सार्धं प्रथमायास्त्रीणि वचनानि, प्रथमाया एकवचनमात्रं वेति पुनर्द्वौ पक्षौ सम्भवतः । एतेषु चतुर्षु पक्षेषु प्रथमैकवचनमात्रमेवेति पक्षः क्षोदक्षमः इति शब्दकौस्तुभे दीक्षिताः प्रत्यपादयन् ।

# सुप आत्मनः क्यच्

**विद्वान् सो.ति. नागराजः, कल्याणनगरी (बेङ्गळूरु)**

भगवतः पाणिनेरष्टाध्याय्यां तृतीयाध्यायस्य प्रथमपादेऽष्टममिदं सूत्रम् । सूत्रेऽस्मिन्पूर्वसूत्रात् "कर्मणः" "इच्छायाम्" "वा" इति त्रीणि पदान्यनुवर्तन्ते । इच्छायामित्यस्य कर्मणीत्यत्रान्वयः । इषिकर्मण इति यावत् । आत्मन इत्यस्य सुप इत्यत्रान्वयः । ततश्च इषिकर्म – आत्मसम्बन्धी च यः सुबन्तार्थस्तद्वाचकात्सुबन्तात् क्यच्प्रत्ययो भवति इच्छायामर्थे इति सूत्रार्थः ।

आत्मनः पुत्रमिच्छतीति विग्रहे "पुत्रम्" इति सुबन्तात्क्यचि "सनाद्यन्ता धातव" इति धातुसंज्ञायां "सुपो धातुप्रातिपदिकयो"रिति सुपो लुकि "क्यचि चे" तीत्वे पुत्रीयधातोर्लटि "शेषात्कर्तरि परस्मैपदम्" इति तिप्प्रत्यये शब्विकरणे पररूपे च कृते "पुत्रीयति" इति रूपं सिद्ध्यति ।

अत्र भाष्ये विचारिता विषया इमे –

१. क्यचि चग्रहणप्रयोजनम् ।
२. आत्मन इति पदस्य प्रयोजनम् ।
३. सुप इति पदस्य प्रयोजनम् ।
४. क्यजन्तपदार्थस्य साधनपरीक्षा ।
५. इष्टःपुत्रः – इष्यते पुत्रः इत्यर्थे क्यजुत्पत्तिविचारः । इति । तेषु विषयत्रयं विव्रियते ।

**१.** इह सूत्रे क्यचि चकारग्रहणं क्यङ्क्यचोः सामान्यग्रहणलाभाय । क्यच्प्रत्यये चकारग्रहणं प्रत्ययान्तस्यान्तोदात्तत्वलाभायेति न वक्तुं युक्तम् । क्यच एकाच्त्वेन प्रत्ययानाञ्चाद्युदात्त औत्सर्गिक इति तत एव इष्टसिद्धेः । क्यचि चेत्यत्र क्यच्क्यङोः क्यच एव ग्रहणलाभाय चकार इत्यपि न । "सुप आत्मनः क्यः" इत्युच्यमानेऽपि क्यङो द्व्यनुबन्धकत्वेन "क्ये च" इति सूत्रे "तदनुबन्धकग्रहणे नातदनुबन्धकस्ये"ति परिभाषया क्यस्यैव ग्रहणं भवति न क्यङ इत्यदोषात् । तर्हि "क्यः" प्रत्ययो यदि विधीयेत, "नः क्ये" इत्यत्रास्यैव ग्रहणं स्यान्न तु क्यङः । "नः क्ये" इत्यत्र सामान्यग्रहणाविघातार्थं "क्यच्" इत्युक्तम् । क्यच्क्यङोरुभयोरपि द्व्यनुबन्धकत्वेन तदनुबन्धकपरिभाषाया अप्रवृत्तिः ।

**२.** इह सूत्रे आत्मग्रहणं परसम्बन्ध्यर्थे भाषायां प्राप्तं क्यचं वारयितुं कृतम् । आत्मपदस्य चेतनमात्रं – परव्यावृत्तं स्वमित्यर्थद्वयम् । आत्मपदार्थस्येच्छायां कर्तृत्वेन–कर्मत्वेन वान्वयो वक्तव्यः, सुबन्तार्थेऽपीति वक्तुं शक्यम् । चेतनमात्रवाचिन आत्मपदस्यार्थं कर्तृत्वेनेच्छायामन्वये आत्मकर्तृकेच्छायामित्यर्थे लब्धे इच्छायामात्मपदार्थान्वयो व्यर्थः । अचेतनस्येच्छाकर्तृत्वासम्भवात् ।

कर्मत्वेनेच्छायामन्वये आत्मकर्मकेच्छायामित्यर्थे लब्धे क्षीरादिकर्मकेच्छायां विहिते क्यचि परतो विहितस्यासुको निर्विषयत्वापत्तिः । सम्बन्धित्वेन सुबन्तार्थान्वये "पुरोहितो राज्ञः पुत्रमिच्छति" इत्यत्रापि चेतनमात्रसम्बन्धित्वं पुत्रेऽस्तीति क्यजुत्पत्तिप्रसङ्गः । परव्यावृत्तिपरस्वपर्यायात्म-शब्दार्थस्येच्छायां कर्तृत्वेनान्वये "राज्ञः पुत्रमिच्छती"त्यत्र पुत्रस्य राजसम्बन्धित्वेऽपि स्वकर्तृकेच्छाविषयत्वानपायेन तत्रार्थे क्यजुत्पत्तिप्रसङ्गः । कर्मत्वेनान्वये क्षीरमिच्छतीत्यर्थे विहिते क्यचि परतोऽसुको निर्विषयता स्यात् । सम्बन्धित्वेन सुबन्तार्थान्वये यद्यपि "पुत्रीयति" इति सिद्ध्यति, तथापि "आत्मनः पुत्रं परस्य स्वामिनमिच्छति" इत्यत्र स्वसम्बन्धिन इच्छाकर्मत्वेन क्यच्प्रसङ्गः । तद्वारणायेच्छाकर्मणि इष्यमाणे रूपे आत्मीयत्वं विवक्षणीयम् । तदा पुत्रस्य परस्वामित्वेनेच्छाकर्मत्वं नत्वात्मीयत्वेनेति क्यच् नोत्पद्यते । तदेवं निर्गलितः सूत्रार्थः – स्वसम्बन्धिनि इच्छाकर्मीभूते सुबन्तार्थे इष्यमाणे रूपे यदाऽऽत्मीयत्वं तदा सुबन्तात् क्यच्प्रत्ययो भवति इच्छायामर्थे इति ।

आत्मसम्बन्धिनि सुबन्तार्थे तद्वाचकात्प्रत्ययोत्पत्तौ छन्दसि परसम्बन्धिनि सुबन्तार्थे तद्वाचकात्प्रत्ययो न स्यादित्यव्याप्तिः । तर्हि सूत्रे आत्मग्रहणमपनीय स्वपरसम्बन्धिनि सुबन्तार्थे इच्छाकर्मीभूते प्रत्ययो विधेयः । यद्येवं राज्ञः पुत्रमिच्छतीत्यत्रातिव्याप्तिः । तत्र पुत्रार्थस्येच्छाकर्मीभूतस्याश्रयणं क्यज्वृत्तावस्ति, सोऽर्थो राजपदार्थसापेक्ष इत्यसमर्थ इत्याश्रित्य क्यज्वृत्तिवारणे छन्दसि "अघायव" इत्यत्राघमिच्छतीत्यर्थस्याश्रयणीयतया परशब्दप्रयोगाभावेऽपि दुःखमात्मना केनापि नेष्यत इति पदाप्रयोगसिद्धपरसम्बन्ध्यघार्थवाचकादसमर्थात् क्यजुत्पत्तिर्न स्यादित्यव्याप्तिः । छन्दसि परसम्बन्धिन इच्छाकर्मीभूताद्यथा प्रत्ययो भवत्येवं लोकेऽपि परसम्बन्धिनीच्छाकर्मीभूते सत्यपि प्रत्ययेन भवितव्यमित्यतिव्याप्तिः । एवं लौकिके प्रयोगेऽतिव्याप्तिं, छन्दसि चाव्याप्तिं वारयितुमात्मग्रहणं कृतम् । कृते तस्मिन् लोके आत्मसम्बन्धिन एव क्यच् । छन्दसि तु क्यचि परे प्राप्तमीत्वं बाधितुं कृतेन "अश्वाघस्यात् " इत्यात्वविधानेन ज्ञापकेन परसम्बन्धिन्यपि क्यच् सिद्ध्यति ।

३. अत्र सूत्रे सुप इति पदं समर्थपरिभाषोपस्थानलाभद्वारा महान्तं पुत्रमिच्छतीत्यर्थे क्यज्वृत्तिवारणाय। सुप इत्यस्यासत्त्वे प्रकृतिमात्रात्क्यजुत्पत्तिः प्राप्ता । क्यचः प्रत्ययत्वेन शास्त्रे प्रत्ययनिरूपितप्रकृतित्वं धातोः, प्रातिपदिकस्य, सुबन्तस्य तिङन्तस्यास्ति प्रसिद्धम् । पाकः, रामः, दाशरथिः पचतितरामिति यथा । एवञ्चात्र सूत्रे सुप इत्यस्याभावेऽविशेषेण प्रकृतिमात्रात्क्यजुत्पत्तिप्रसङ्गः। तत्र सुबन्ताद्धीष्यते, प्रातिपदिकात्प्राप्तावपि न विशेषः । यद्यपि सुबन्तादुत्पत्तौ सुबन्तस्य पदत्वं सिद्धमिति, क्यच्क्यङोः परयोः पदसंज्ञाविधायकं "नःक्ये" इति शास्त्रं नियमार्थं भवतीति तेन वाचमिच्छति वाच्यतीत्यत्र कुत्वव्यावृत्तिः फलम् । तथापि प्रातिपदिकादुत्पत्तावपि "राजीयति" इत्यत्र नलोपसिद्धये "नःक्ये" इत्यस्य विधित्वमेषितव्यम् । तेनैव "वाच्यति" इत्यत्र कुत्वव्यावृत्तिः सिद्ध्यति । तस्मात्प्रातिपदिकात्सुबन्ताद्वोत्पत्तावविशेष एव । यद्यप्यविशेषेणोत्पत्तिरिति पक्षे "नः क्ये" इत्यस्य युगपद्विधिनियमोभयमुखेन प्रवृत्तेर्वक्तुमशक्यतया – "राजीयति" इत्यत्र प्रातिपदिका-दुत्पत्तिपक्षे "नः क्ये" इत्यस्य नियमार्थताया अपि सत्त्वेन विधित्वाभावान्नलोपो न स्यात् । एवं "वाच्यति" इत्यत्र सुबन्तादुत्पत्तिपक्षे "नः क्ये" इत्यस्य विध्यर्थताया अपि सत्त्वेन

नियमाभावाज्जश्त्वादिकं स्यात् । तस्माद्विशेषोऽस्त्येव । तथापि पूर्वसूत्रात्कर्मण इत्यनुवृत्तेस्तत्र धातुरूपं कर्म परिनिष्ठितत्वप्रयोजक-प्रत्ययान्तत्वानाक्रान्तशब्दवाच्यं गृहीतम् । अत्रापि सूत्रे तस्यैव कर्मपदस्यानुवर्तनात् , सुप इत्यस्याभावे प्रकृतिमात्रादुत्पत्तिरिति पक्षे सुबन्तादुत्पत्तिरेव न भवतीत्यविशेष एव । प्रातिपदिकादुत्पत्तिपक्षमाश्रित्य ''नः क्ये'' इत्यस्य विधित्वेन ''राजीयति'' इत्यस्य सिद्धिर्वाच्यतीत्यस्य व्यावृत्तिश्च सिद्ध्यतीत्यदोषः । एवं सति सुपो ग्रहणस्य किं फलम् ? धातोः प्रत्ययोत्पत्तिवारणम् । धातोः प्रकृतिमात्राद्विधानपक्षमाश्रित्य प्रवृत्तं क्यचं प्रकृतिविशेषाद्धातोर्विहितः सन् बाधत इत्यदोषः । न हि परसम्बन्धीच्छायां सनोऽवकाशः, तस्यापि इषिणैककर्तृकादेव विधानात् । सन्क्यचोरियान् विशेषः । धात्वर्थासत्त्वभूतक्रियायाः कर्मत्वं पूर्वसूत्रे, इह विभक्त्यन्तवाच्यकर्मत्वशक्तिमद्द्रव्यवाचकात्सुबन्तात्क्यजिति द्रव्यस्य कर्मत्वमिति । तस्माद्धातोर्न क्यच् । तिङन्तात्स्यादिति चेत् – तस्य कर्ममात्राभिधायकत्वाभावादप्राप्तिः । ततश्च सुपः किं फलम् ? वाक्याद्यावृत्तिरित्युच्यते ।

आत्मनो महान्तं पुत्रमिच्छतीति विग्रहे ''महान्तं पुत्रमि''त्यस्मात्क्यच्स्यात् । तथा सति प्रत्ययार्थेच्छाया अभिधानं पदद्वयेनापि कार्यमिति परस्परमसामर्थ्यात्समासाभावेनाऽऽत्त्वमौत्तरपदिकं न स्यात् । महापुत्रीयतीति । नेष्यत एष प्रयोग इति न । महांश्चासौ पुत्रश्चेति विवक्षोत्तरं महापुत्रमिच्छतीत्यर्थे तस्येष्टत्वात् । महान्तं पुत्रमिच्छतीत्यर्थे परं नेष्यते । तद्वारणाय सुपो ग्रहणम् । सूत्रे सुप्पदग्रहणे क्यज्विधिः पदविधिर्भवति । समर्थः पदविधिरिति समर्थपरिभाषोपस्थानेन महान्तं पुत्रमिच्छति इत्यत्र पुत्रपदार्थस्य महत्पदार्थेन व्यपेक्षासामर्थ्यमस्तीति, क्यजुत्पत्तौ तु एकार्थीभावसामर्थ्यमाश्रयणीयमिति युगपत्सामर्थ्यद्वयमाश्रयितुमयुक्तमिति क्यजुत्पत्तिर्वार्यते । एवं सुप इत्यस्य समर्थपरिभाषोपस्थापनं फलमिति शिवम् ।

# वार्तिककारानुसारेण “णेरणौ …” सूत्रार्थादिपरिशीलनम्

विद्वान् एस्.एल्.पि.आञ्जनेयशर्मा, पाण्डिचेरी

**उपोद्घातः**

णेरणौ…सूत्रार्थविषये व्याख्यातृजनस्यमतभेदाः सन्ति । तस्य अर्थः अयमेव इति निर्णेतुं सामान्यजनस्य शक्तिर्नास्ति, अत एव महाभाष्यादिषु कृतभूरिपरिश्रमैः कैश्चित् व्याख्यातृभिः “णेरणावितिसूत्रार्थं भगवान् वेद पाणिनिः । भाष्यकारस्ततश्चाहं नान्योऽस्ति जगतीतले ॥” इत्येवं प्रकटितमिति श्रूयते । अत्र प्रथमतः वार्तिककारेण कयाचिद्रीत्या सूत्रार्थः निर्णीतः । ततः भाष्यकारः वार्तिककारोक्तान् विषयान् कांश्चित् अन्यथा संसाध्य, कांश्चिच्च निराकृत्य च सूत्रार्थमन्यथा निर्णीतवान् । ततः कैयट–जयादित्य–हरदत्त–भट्टोजीदीक्षित–नागेशप्रभृतयः वार्तिक–भाष्ययोराशयमन्यथान्यथा निर्णीतवन्तः । स्वस्वव्याख्यानानुकूलभूताः युक्तीः प्रदर्श्य परेषां व्याख्यानं दूषितवन्तश्च । एवं स्थिते, तेषां मध्ये युक्तायुक्तत्वविचारः मादृशस्य अशक्यः । अतः तेषु एकैकस्यापि अभिप्रायः असंकीर्णतया गृहीतश्चेत् मादृशाः कृतकृत्याः भवन्ति इति मत्वा प्रथमतः **वार्तिककारानुसारेण “णेरणौ…” सूत्रार्थादिकं व्याख्यातुं कश्चित्प्रयत्नः अत्र क्रियते ।**

सूत्रार्थप्रदर्शनम्[1]

“णेरणौ यत्कर्म णौ चेत् स कर्ताऽनाध्याने[2]” इति सूत्रं णेः, अणौ, यत्, कर्म, णौ, चेत्, सः, कर्ता, अनाध्याने, इति नवपदसहितम् ।

अत्र सूत्रे वार्तिककाररीत्या त्रीणि वाक्यानि । णेः इत्येकं वाक्यम् । “अणौ यत्कर्म णौ चेत् स कर्ता” इति द्वितीयं वाक्यम् । अनाध्याने इति तृतीयं वाक्यम् ।

**“ णेः” इति प्रथमवाक्यस्यार्थः**

---

[1] अत्र वार्तिककारानुसारेण दीयमानः अर्थः लक्ष्याणि तत्तत्पदानामर्थाश्च साक्षात् वार्तिके न लभ्यन्ते । तथापि भाष्य–कैयटादिपर्यालोचनया संगृहीताः । एवं यद्यत् वार्तिककारस्य अविरुद्धं तदभिप्रायज्ञानाय अपेक्षितं च, तत्तत् सर्वम् अन्यव्याख्यानेभ्यः संगृहीतम् इति निवेद्यते ।

[2] पा.सू. 1–3–67/2738 ; सूचना — अत्र निबन्धोद्धृतसूत्राणां विषये, पूर्वं आष्टाध्यायीस्था अध्याय–पाद–सूत्रसंख्या दत्ता । “..”/“..” एतच्चिह्नानन्तरं दत्ता संख्या तु सिद्धान्तकौमुदीस्था सूत्रक्रमसंख्या इति ज्ञेया ।

"अनुदात्तङित आत्मनेपदम् (पा.सू.)[1]" इति सूत्रात् आत्मनेपदम् इत्यनुवर्तते । "लस्य (पा.सू.)[2]" इत्यधिक्रियते । धातुविहितानां "त–आताम्–झ..." इत्यादीनां प्रत्ययानामेव आत्मनेपदसंज्ञायाः विहितत्वात् , धातुं विना आत्मनेपदप्रत्ययानाम् असम्भवात् (तदनुपपत्त्या) "धातोः" इति पदम-ध्याह्रियते। णेः इत्यत्र "णि"पदेन णिच्प्रत्ययस्य ग्रहणम् । यद्यपि "उत्सृष्टानुबन्धग्रहणे सामान्यग्रहणम्" इति न्यायेन णिङ् – णिचोः उभयोरपि ग्रहणम् प्राप्तम् , तथापि णिच एव ग्रहणम् न णिङः, णिङः ङित्त्वेन "अनुदात्तङित आत्मनेपदम्" (पा.सू.) इत्येनैव आत्मनेपदस्य सिद्धतया तत्र प्रयोजनाभावात् । अत एव अत्र हरदत्तेन उक्तम्–"...णेः" इति यद्यपि सामान्यनिर्देशः, तथापि पुच्छभाण्डादिणिङ् (द्र.3–1–20) तु न गृह्यते, अणौ कर्मणः णावसम्भवात् । कमेर्णिङस्तु (द्र.3–1–30) "आयादय आर्धधातुके वा"[3] इति वचनादण्यन्तावस्था सम्भवति, कर्मणश्च कर्तृत्वं "कमिष्यते योषितं देवदत्तः > कामयिष्यते योषित्स्वयमेव"[4] इति । तथापि ङित्त्वादेव सिद्धेः सोऽपि न गृह्यत इति णिच एव ग्रहणम् ...५" इति तत्रापि हेतुमण्णिच एव ग्रहणं न तु स्वार्थणिचः इति भाष्य–कैयटादिष्वस्ति । अत एव कैयटेन उक्तम्– ... " नित्यत्वात् (चुरादि)णिचः, केवलानां चुरादीनां प्रयोगाभावात् णौ कर्मणोऽसम्भवात् , णेरिति हेतुमण्णिचो ग्रहणम् । ..." तथा च णिच एव, तत्रापि हेतुमण्णिच एव ग्रहणं न तु णिङः इति सिद्धम्[5] । ततः, णेः प्रत्ययतया "प्रत्ययग्रहणे यस्मात् स

---

[1] . 3–4–077/2153

[2] . 3–4–077/2153

[3] 3–1–31 /2305

[4] "कमिष्यते योषितं देवदत्तः > कामयिष्यते योषित्स्वयमेव" इत्येवंप्रकारेण " > " एतच्चिह्नसहिततया च निर्देशे "कमिष्यते योषितं देवदत्तः" इत्येवमादिपूर्वभागः " कामयिष्यते योषित् स्वयमेव" इत्येवमादिपरभागस्य मूलम् , इति बोध्यम् । एवमुत्तरत्र " > " एतच्चिह्नसहिततया निर्देशे सर्वत्र एववेव बोध्यम् ।

[5] अविशेषेण चुरादि(स्वार्थ)णिचः हेतुमण्णिचश्च ग्रहणम् इति काशिका–पदमञ्जरीकृतौ । अत एव हरदत्तेन उक्तम्– "...युक्तं तत्र=अणावकर्मकात् ..." (1–3–88/2754 )इति सूत्रे, हेतुमण्णिचो विधिरिति, तत्र बुधादि(1–3–86/2752 )सूत्रे "णेः " इति वर्तते । बुधादिभ्यश्च हेतुमण्णिजेव संभवति । इह तु सामान्येन ग्रहणम् , विशेषहेत्वभावात्..." इति । द्र. का. वृ.,प्र.भा.पृ. 468 (पदमञ्जरी) अत्र वार्तिककारेणापि अविशेषेण चुरादि(स्वार्थ)णिच् हेतुमण्णिच् च गृहीतमित्यपि आभाति । अत एव उत्तरत्र "गणयति गोगणं गोपालकः > गणयति गोगणः" इत्यत्र द्वितीयकक्ष्यायाम् आत्मनेपदव्यावृत्तिरपि णेरणौ...सूत्रस्य प्रयोजनमिति भावितं स्यात् इति चिन्त्यते ।

विहितः तदादेः तदन्तस्य ग्रहणम्[1]" इति परिभाषया तदन्तांशलाभे ण्यन्तात् इति लभ्यते । णेः इत्यस्य पञ्चम्यन्ततया "तस्मादित्युत्तरस्य[2]" (पा.सू.) इति परिभाषया अव्यवहितत्व – परत्वांशोपस्थितिः भवति। तस्य "लस्य" (पा.सू.) इत्यनेन सह सम्बन्धो भवति । तथा च ण्यन्तात् अव्यवहितपरस्य लस्य इति लभ्यते । लस्य इत्यस्य षष्ठ्यन्ततया "षष्ठी स्थानेयोगा[3]" (पा.सू.) इति परिभाषया "स्थाने" इत्यर्थः लभ्यते । ततश्च ण्यन्तात् धातोः अव्यवहितपरस्य लस्य स्थाने आत्मनेपदप्रत्ययाः आदेशाः भवन्ति इति "णेः" इति प्रथमवाक्यस्य अर्थः ।

**" अणौ यत् कर्म णौ चेत् स कर्ता" इति द्वितीयवाक्यस्यार्थः**

"अणौ यत् कर्म णौ चेत् स कर्ता" इति द्वितीयं वाक्यम् । अत्र "अणौ" इत्यस्य निष्पत्तिः एवम् – न णिः (= णिच्प्रत्ययः ) = अणिः, तस्मिन् अणौ इति । अत्रापि "अणौ– णौ" पदयोः विद्यमानेन "णि" पदेन "प्रत्ययग्रहण...[4]" परिभाषया तदन्तांशः लभ्यते । कर्मशब्दः लोके, "कर्तरि कर्मव्यतीहारे[5]" (पा.सू.) इत्यादौ क्वचित् शास्त्रे च क्रिया इत्यर्थे प्रयुक्तः, "कर्मणि द्वितीया" इत्यादिसूत्रेषु कर्मकारकम् इत्यर्थे च प्रयुक्तः, तथापि "कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययः[6]" इति परिभाषाबलात् प्रकृतसूत्रे कर्मकारकम् इत्येव अर्थः स्वीक्रियते । तथा च ण्यन्तभिन्ने धातौ यत् कर्मकारकं सः ण्यन्ते धातौ कर्ता भवति चेत् इति द्वितीयवाक्यार्थः फलति ।

**"अनाध्याने" इति तृतीयवाक्यस्यार्थः**

"अनाध्याने" इति पृथक् वाक्यम्" इति पक्षे "भवति" इति क्रियापदम् अध्याहार्यम् । "अनाध्याने "इत्यत्र नञ् (=अ) पृथक्कृत्य भवतिक्रियया संबन्धनीयः । "णेः" इति प्रथमवाक्यं सर्वम् अत्र अनुवर्तते । ततश्च आध्याने अर्थे विद्यमानात् ण्यन्तात् (=आध्यानार्थकात् ण्यन्तात् ) परस्य लस्य स्थाने आत्मनेपद-प्रत्ययादेशो न भवति इति "अनाध्याने" इति तृतीयवाक्यस्य अर्थः[7] ।

---

1 परि. शे., प. भा.संख्या. 24

2 1–1–067/0041

3 1–1–049/ 0038

4 परि. शे., प. भा. संख्या. 24

5 1–3–014 /2680

6 परि. शे., प.भा.संख्या. 9

7 अनाध्याने इति प्रसज्यप्रतिषेधपरतया पर्युदासपरतया च व्याख्यातुं शक्यते । प्रसज्यप्रतिषेधपक्षे – अनाध्याने इति तृतीयं पृथक् वाक्यम् । तस्य च अर्थः उपरि दत्तः । पर्युदासपक्षे तु "अनाध्याने" इति "णेः" इति

एवं वाक्यत्रयं मिलित्वा लक्ष्यसंस्कारोपयोगिमहावाक्यार्थबोधं जनयति । तेन लक्ष्यसंस्कारो भवति ।

**अस्य सूत्रस्य लक्ष्याणि– तत्र समन्वयश्च**

"आरोहयते हस्ती (स्वयमेव)" इत्याद्यकर्मकप्रयोगाः अस्य सूत्रस्य उदाहरणम् । तस्य निष्पत्तिः शास्त्रकारैः एवमूहिता[1]—

1. "आरोहन्ति हस्तिनं हस्तिपकाः" इति हस्तिपकव्यापारवाची सर्वसाधारणः प्रयोगः । अत्र "आ+रुह्"धातुः कर्तृगतं न्यग्भवनानुकूलं न्यग्भावनरूपं व्यापारं, कर्मगतं न्यग्भवनरूपं फलमपि बोधयति[2] । ततश्च "आरोहन्ति हस्तिनं हस्तिपकाः" इति वाक्यात् "हस्ती न्यग्भवनाश्रयो भवति, हस्तिपकास्तु विशिष्टेन स्वप्रयत्नेन हस्तिनं न्यग्भवनाश्रयं कुर्वन्ति" इति प्रतीयते । ततः, वक्ता यदा "हस्तिपकानां आयासं विना हस्ती एव स्वयमारोहणविषयो भवति" इति विवक्षते[3] तदा, (सामान्यतः प्रथमवाक्ये एव अन्वेति । ततश्च आध्यानभिन्ने अर्थे विद्यमानात् ण्यन्तात् धातोः परस्य लस्य स्थाने आत्मनेपदं भवति इत्यर्थः । तथा सति, अस्मिन् पक्षे सूत्रे वार्तिकमते वाक्यद्वयमेव ।

---

1 अत्रेदमवधेयम्—लोके "आरोहयते हस्ती (स्वयमेव) – दर्शयते भवः (स्वयमेव)" इत्यादयः शिष्टप्रयोगाः दृश्यन्ते । तदन्व्याख्यानाय पाणिनिना "णेरणौ…" सूत्रं कृतम् । तत्सूत्रं लक्ष्येषु "आरोहयते हस्ती (स्वयमेव) इत्यादिषु कथं समन्वितं भवति ? इति सूत्र–वार्तिक– भाष्यकारैः नोक्तम् । सूत्रान्तरेष्विव बहुभिः ऊहितुमपि न शक्यते । अतः सूत्रादिव्याख्यातृभिः भर्तृहरि–कैयटादिभिः "निवृत्तप्रेषणपक्ष–कक्ष्याचतुष्टयादिना लक्ष्येषु सूत्रादिसमन्वयः सूत्रकाराद्यभिमतः इति ऊहितः" इति ।

2 सकर्मकधातवः सर्वेऽपि कञ्चित् व्यापारम् तज्जन्यं तद्यधिकरणं फलं च बोधयन्ति । तत्र धात्वर्थव्यापाराश्रयः कर्ता धात्वर्थव्यापारव्यधिकरणफलाश्रयः कर्म इति वैयाकरणानां सिद्धान्तः ।

वार्तिककारमते "आ+रुह्"धातुः कर्मस्थक्रियकः । तद्रीत्या आ+रुह्धातोः न्यग्भावनम् = अधोदेशसंयोगानुकूलव्यापारः अर्थः । "रुहिर्गत्यर्थः" इति भाष्यमनुसरतां मते तु "आ+रुह्"धातुः ऊर्ध्वदेशसंयोगानुकूलव्यापारार्थकः । वार्तिकमते कर्मकर्तरि हस्ती आरुह्यते इति भवति, भाष्यमते तु हस्ती आरोहति इत्येव प्रयोगः भवति इति मनसि स्थापनीयम् ।

3 भाषायां न केवलं वस्तुस्थित्यनुसारेण, अपि तु विवक्षानुसारेणापि कारकाणि भवन्ति । "देवदत्तः काष्ठैः स्थाल्यां तण्डुलं पचति" इत्यत्र विक्लित्यनुकूलव्यापारे स्वतन्त्रत्वात् वस्तुत एव देवदत्तस्य कर्तृत्वम् । अत्र तण्डुले विक्लित्तियोग्यतां दृष्ट्वा देवदत्तः तदनुकूलव्यापारं करोति इत्यर्थः प्रतीयते । देवदत्तस्य व्यापारं बहु अनपेक्ष्य, अनायासेन विक्लित्याश्रयो भवति तण्डुलः इति विवक्षायां वस्तुतः विद्यमानोऽपि देवदत्त(कर्तृ) व्यापारः अल्पत्वात् न विवक्ष्यते, यथा " अनुदरा कन्या" इत्यादौ क्वचित् कन्यायां विद्यमानमपि उदरवत्त्वम् अल्पत्वात् न

कर्मव्यापारोपसर्जनं कर्तृव्यापारं बोधयन्) धातुः कर्तृगतं व्यापारं परित्यज्य कर्मव्यापारमात्रमभिधत्ते । तदा पूर्वावस्थास्थः कर्ता वाक्ये न प्रयुज्यते, पूर्वावस्थास्थं कर्म तु प्रधानीभूतधात्वर्थाश्रयत्वात् "स्वतन्त्रः कर्ता[1]" (पा.सू.) इति सूत्रेण कर्तृसंज्ञां लभते। तथा च कर्तुः सौकर्यविवक्षायाम् "आरोहन्ति हस्तिनं हस्तिपकाः" इति प्रयोगात् "आरुह्यते हस्ती" इति प्रयोगः संपद्यते । अयमेवाशयः सिद्धान्तकौमुद्यां कर्मकर्तृप्रकरणारम्भे – यदा सौकर्यातिशयविवक्षया कर्तृव्यापारो न विवक्ष्यते तदा कारकान्तराण्यपि कर्तृसंज्ञां लभन्ते इति वाक्येन प्रकटितः । एवमेव विवक्षानुसारेण प्रयोगव्यवस्था बहुत्र दृश्यते । तथा च हस्तिपकव्यापारस्य धातुतः त्यागे, हस्तिव्यापारस्य प्राधान्यविवक्षायाम्–

2. "हस्ती आरुह्यते" इति प्रयोगः भवति[2]इति सिद्धम् । ततः पूर्वं परित्यक्तस्य हस्तिपकव्यापारस्य हस्तिप्रयोजकव्यापारत्वेन विवक्षायाम् अर्थात् स्वयम् आरोहनविषयभावमापद्यमानं हस्तिनम् हस्तिपकाः साहाय्याचरणेन प्रयोजयन्ति इति विवक्षायाम् आरुह् धातोः णिचि

3. "आरोहयन्ति हस्तिनं हस्तिपकाः" इति प्रयोगः भवति । पुनः कर्तुः सौकर्यातिशयविवक्षया, हस्तिपकव्यापारस्य परित्यागे, हस्तिव्यापारस्य प्राधान्यविवक्षायाम् तस्यैव धातुवाच्यत्वे

4. "आरोहयते हस्ती" इति प्रयोगः भवति– इति । (अस्य निवृत्त–प्रेषणपक्षरीत्या व्युत्पादनमिति व्यवहारः । )

अत्र "आरोहन्ति हस्तिनं हस्तिपकाः" इत्यण्यन्तकक्ष्यायां कर्म हस्ती, "आरोहयते हस्ती" इति ण्यन्त(=चतुर्थ)कक्ष्यायां कर्ता जातः । अत्र ण्यन्तधातुश्च न आध्यानार्थकः । अतः आरेहयते हस्ती इत्यत्र ण्यन्ताद्धातोः प्रकृतसूत्रेण आत्मनेपदं भवति ।

**"णेरणौ..." सूत्रदलसार्थक्यम्**

अत्र "णेः" इति प्रथमवाक्यस्य अभावे अणौ कर्म णौ कर्ता भवति चेत् अण्यन्तादात्मनेपदम् इत्यपि अर्थः स्यात् । तथा सति, "आरोहन्ति हस्तिनं हस्तिपकाः" इत्यत्र अणौ कर्मणः हस्तिनः "आरोहयते

---

विवक्ष्यते । क्वचिदविद्यमानोऽपि धर्मः प्रयोजनविशेषप्रतिपादनाय विवक्ष्यते । यथा "समुद्रः कुण्डिका" इत्यादौ समुद्रे असन्नपि कुण्डिकात्वधर्मः विवक्ष्यते अगस्त्यस्य विषये, यः समुद्रं अनायासेन पीतवान् तस्य, यश्च समुद्रं सलील–मुल्लङ्घितवान् तस्य हनूमतश्च अतिशयप्रतिपादनाय ।

1. 1–4–054 /0559

2 वार्तिकमते "आरुह"धातुः न्यग्भावनार्थकः । अत एव कर्मस्थक्रियकः । तेन कर्मवद्भावे यकि आत्मनेपदे च "आरुह्यते हस्ती" इति भवति । भाष्यमते तु "आरुह"धातुः,गत्यर्थकः=ऊर्ध्वदेशसंयोगानुकूलव्यापारार्थकः। अत एव कर्तृस्थक्रियकः, अतः कर्मवद्भावो न भवति । अतः " आरोहति हस्ती" इत्येव प्रयोगः ।

हस्ती" इत्यत्र णौ कर्तृत्वात् प्रथमकक्ष्यास्थात् अण्यन्तादपि धातोः आत्मनेपदं स्यात् । तद्वारणाय "णेः" इति । ततश्च अण्यन्ते आत्मनेपदस्य वारणं भवति ।[1]

"अणौ यत्कर्म णौ चेत् स कर्ता" इति द्वितीयवाक्याभावे "आरोहन्ति हस्तिनं हस्तिपकाः > तान् हस्तिनम् आरोहयति महामात्रः"[2] इत्यादौ अणौ कर्मणः णौ कर्तृत्वाभावेऽपि शुद्धहेतुमण्ण्यन्तात् प्रकृतसूत्रेण आत्मनेपदं स्यात् । अतः "अणौ यत्कर्म णौ चेत् स कर्ता" इति द्वितीयवाक्यम् । प्रकृते अणौ कर्मणः णौ कर्तृत्वाभावात् न आत्मनेपदम् ।

"अनाध्याने इत्यस्य अभावे" स्मरयति वनगुल्मः (स्वयमेव) इत्यादावपि आत्मनेपदं स्यात् । आध्यानं नाम उत्कण्ठापूर्वकं स्मरणम् । "कोकिलः वनगुल्मं स्मरति" इति साधारणप्रयोगः प्रथमकक्ष्या। यथा मातुस्सकाशात् बहिरानीतः शिशुः अन्नपानादिकं विहाय मातरमेव उत्कण्ठापूर्वकं स्मरति, तथा वनगुल्मात् बहिरानीतः कोकिलः वनगुल्मम् उत्कण्ठया स्मरति इति तस्य अर्थः । ततः सौकर्यविवक्षया कर्तृव्यापारपरित्यागे कर्मण एव कर्तृत्वे विवक्षिते "वनगुल्मः स्मरति" इति द्वितीयकक्ष्या। ततः, पूर्वं परित्यक्तस्य कर्तृव्यापारस्य प्रयोजकव्यापारत्वेन विवक्षायां स्मृधातोः णिचि "कोकिलः वनगुल्मं स्मरयति"[3] इति तृतीयकक्ष्या भवति । ततः, सौकर्यातिशयविवक्षया प्रयोजकव्यापारस्य परित्यागे " स्मरयति वनगुल्मः" इति चतुर्थकक्ष्या भवति ।

प्रकृतसूत्रे "अनाध्याने" इति पदं नास्ति चेत् "स्मरयति वनगुल्मः" इत्यादावपि प्रकृतसूत्रेण आत्मनेपदं स्यात् , अणौ कर्मणः वनगुल्मस्य ण्यन्ते कर्तृत्वात् । अतः "अनाध्याने" इति पदं निवेशितम्। अत्र अणौ कर्मणः णौ कर्तृत्वेऽपि, ण्यन्तस्य धातोः सत्त्वेऽपि आत्मनेपदं न भवति, स्मृधातोः आध्यानार्थकत्वेन "अनाध्याने" इति वाक्येन तस्य निषिद्धत्वात् । एवं सूत्रस्थानि त्रीणि वाक्यानि सप्रयोजनानि इति सिद्धम् ।

---

1 किञ्च हेतुमण्णिज्ग्रहणार्थं " णेः" इति पदमावश्यकम् इत्यपि तत्र तत्र व्याख्यानेषु अस्ति ।

2 "आरोहन्ति हस्तिनं हस्तिपकाः > तान् हस्तिनम् आरोहयति महामात्रः" इत्येवंप्रकारेण ">" एतच्चिह्न–सहिततया च निर्देशे "आरोहन्ति हस्तिनं हस्तिपकाः" इत्येवमादिपूर्वभागः "तान् हस्तिनम् आरोहयति महामात्रः" इत्येवमादिपरभागस्य मूलम् , इति बोध्यम् ।

3 स्मृ आध्याने इति धातोः णिचि, वृद्धौ स्मार् इति जाते, स्मृ धातोः " घटादयो मितः "इति गणसूत्रेण मित्त्वात् , णौ परे "मितां ह्रस्वः( 6–4–092/2568 )" इति ह्रस्वे स्मरयति इति भवति, न तु स्मारयति इति ।

"णेरणौ..." सूत्रसंबन्धिविषयेषु सामान्यतया एवं स्थितेषु, वार्तिककारेण विषयत्रयमत्र योजितम् । एते त्रयो विषयाः त्रिषु प्रघट्टकेषु[1] विभज्य प्रदर्श्यन्ते ।

**प्रथमप्रघट्टके वार्तिककारप्रदर्शितो विषयः**

तत्र प्रथमप्रघट्टके, "णेरणौ..." सूत्रस्य **क्वचित् प्रसक्ता अतिव्याप्तिः** वारिता । तथा हि—

पूर्वोक्तार्थकस्य णेरणौ सूत्रस्य "आरोहयति हस्ती मनुष्यान्" इत्यादिप्रयोगे अतिव्याप्तिः प्राप्नोति । "आरोहयति हस्ती मनुष्यान्" इति प्रयोगसिद्धिरेवम्—"आरोहन्ति हस्तिनं मनुष्याः" इति साधारणः प्रयोगः। अत्र मनुष्यव्यापारस्य सौकर्यविवक्षया,हस्तिनः कर्मणः प्रयोजककर्तृत्वविवक्षायाम् , [अर्थात् , हस्ती न केवलम् आरोहणविषयो भवति, अपि तु आरोहतः मनुष्यान् – ममारोहत ममारोहत इति प्रेरयति च, इत्येवंसौकर्यविवक्षायाम्] हस्तिनिष्ठप्रयोजकव्यापारे धातोः णिचि "हस्ती मनुष्यान् आरोहयति" इति भवति । अत्र ण्यन्तादात्मनेपदं नेष्टम् , तथापि अत्र अण्यन्त (=प्रथम) कक्ष्यायां कर्मणः हस्तिनः "आरोहयति हस्ती मनुष्यान्" इति ण्यन्ते कर्तृत्वात् प्रकृतसूत्रेण आत्मनेपदं प्राप्नोति । अतः वार्तिककृता "णेरात्मनेपदविधानेऽण्यन्तस्य कर्मणः तत्रोपलब्धिः" "इतरथा हि सर्वप्रसङ्गः" इति वार्तिकद्वयं[2] कृत्वा सा अतिव्याप्तिः वारिता । तयोः वार्तिकयोः अयमर्थः– णेः= ण्यन्तात् , आत्मनेपदविधाने= आत्मनेपदविधानकाले, अण्यन्तस्य कर्मणः= अण्यन्ते सतः कर्मणः एव नान्यस्य कर्मणः, तत्र=ण्यन्ते, उपलब्धिः=[कर्तृत्वेन] उपस्थितिः अपेक्षिता । इतरथा हि = यस्मात् एतद्वार्तिकाकरणे, सर्वप्रसङ्गः= सर्वत्र – अनिष्टस्थलेष्वपि, "णेरणौ..." (पा.सू) सूत्रस्य अतिप्रसङ्गः स्यात् , अतः अयमप्यंशः सूत्रे योजयितव्यः इति ।

अत्र इयं शङ्का भवति – अण्यन्ते सतः कर्मणः ण्यन्ते **कर्तृत्वेन कर्मत्वेन वा** उपस्थितिः अपेक्षिता ? यदि **कर्तृत्वेन,** तदा तस्याः"स कर्ता" इति वाक्येनैव सिद्धत्वात् , इदं वाक्यम् व्यर्थम् । यदि **कर्तृत्वेन,** तदा एतद्वाक्यं "स कर्ता" इत्युत्तरवाक्येन विरुद्धार्थकम् भवति, अतः एतद्वार्तिकतात्पर्यं किम् ? इति । एवं यथाश्रुतार्थस्वीकारे पूर्वोक्त–दोषसद्भावात् वक्तृतात्पर्यानुरोधेन लक्षणया "अण्यन्तकर्मातिरिक्तकर्म ण्यन्ते नास्ति चेत् तदा आत्मनेपदं भवति, अण्यन्तकर्मातिरिक्तकर्म ण्यन्ते अस्ति चेत् आत्मनेपदं न

---

1.णेरणौसूत्रभाष्यव्याख्याने भट्टोजीदीक्षितेन–प्रथम प्रघट्टके एवमस्ति द्वितीय प्रघट्टके एवमस्ति...इत्येव निर्दिष्टमस्ति । अतः मयापि अत्र प्रघट्टकपदेन व्यवहारः कृतः ।

2 व्या.म.भा., द्वि.ख.,1–3–67.वा.1&2. पृ.177

भवति इत्येवमर्थं बोधयति इदं वार्तिकम् इति व्याख्यातं व्याख्यातृभिः[1] । प्रकृतोदाहरणे अण्यन्ते अविद्यमानं “मनुष्यान्” इति कर्म ण्यन्ते वर्तते । अतः तत्र अतिव्याप्तिः वारिता भवति ।

**भाष्यकृद्दत्तप्रत्युदाहरणपरिशीलनम्**

भाष्ये तु – एतद्वार्तिकव्यावर्त्यतया “आरोहन्ति हस्तिनं हस्तिपकाः>आरोहयमाणो हस्ती [हस्ती ] स्थलम् आरोहयति मनुष्यान् , इति वाक्यं दत्तम् । अत्र ...[हस्ती ] स्थलम् आरोहयति मनुष्यान् , इयेतावानेव अतिव्याप्तिप्रदर्शनाय उद्दिष्टो भागः । आरोहयमाणो हस्ती इति तु सूत्रस्योदाहरणमेव । तथा हि —

तादृशप्रत्युदाहरणसहितभाष्यप्रघट्टकस्यायमर्थः–

अत्र वाक्ये “आरोहन्ति हस्तिनं हस्तिपकाः” इति “आरोहयमाणो हस्ती” इत्यस्य मूलभूतं वाक्यम् । तथा च आरोहन्ति हस्तिनं हस्तिपकाः > हस्ती आरुह्यते > आरोहयन्ति हस्तिनं हस्तिपकाः > आरोहयमाणो हस्ती इति कक्ष्याक्रमः । तत्र चतुर्थकक्ष्यायां “णेरणौ...”(पा.सू.)सूत्रेण आत्मनेपदसंज्ञकः “शानच्” प्रत्ययो जातः । इदं तु “णेरणौ...”(पा.सू.)सूत्रस्य उदाहरणमेव ।

प्रत्युदाहरणवाक्ये द्वितीयार्धे “स्थलमारोहयति मनुष्यान्” इत्यत्रापि देहलीदत्तदीपन्यायेन हस्ती कर्तृतया अन्वेति । तथा च “हस्ती स्थलमारोहयति मनुष्यान्” इति द्वितीयार्धम् । तस्य मूलभूता कक्ष्या तु “मनुष्याः हस्तिनम् आरोहन्ति” इति । अत्र हस्तिनः कर्मणः प्रयोजकत्वविवक्षायां धातोः णिच् कृतः। ततः, “स्थलम्” इति अपूर्वं कर्मान्तरम् अधिकतया योजितम् तथा च “मनुष्याः हस्तिनम् आरोहन्ति” इत्यस्मात् पूर्वोक्तक्रमेण “हस्ती मनुष्यान् स्थलमारोहयति” इति प्रयोगः जायते । अत्र हस्तिरूपस्य अण्यन्तकर्मणः अपेक्षया अधिकस्य स्थलरूपस्य मनुष्यरूपस्य च कर्मणः सत्त्वात् “णेरणौ...” (पा.सू.) सूत्रं न प्रवर्तते इति भावः । तत्र “आरोहयमाणः” इति प्रत्युदाहरणानन्तर्गतः

---

1 णेरणौ सूत्रे “अणौ यत्कर्म णौ चेत् स कर्ता” इति भागे एकस्मिन्वाक्ये सति, कर्मान्तरनिवृत्तिरलभ्येति “णेरि”ति वार्तिकारम्भः । “ इत्युक्तं कैयटेन । एवमेव “अणौ यत्कर्म णौचेत्” इति वाक्यं विभज्य वार्तिकोक्तार्थं संगृह्य वार्तिकं प्रत्याख्यातवतः भाष्यकारस्य आशयवर्णनकाले “अणौ यत्कर्म णौचेत्तत्कर्मे”ति प्रतिनिर्देशेन च कर्मान्तरव्यावृत्तिः क्रियते, न त्वणौ कर्मणो णौ कर्मत्वसद्भावः प्रतिपाद्यते “स कर्ते”ति वाक्यान्तरेण तस्य कर्तृत्वप्रतिपादनात् युगपदेकक्रियापेक्षया कर्मत्व–कर्तृत्वविरोधादेकस्य ... इत्युक्तं कैयटेन । एतेन ज्ञायते— वार्तिकं कर्मान्तरनिवृत्तिपरतया स्वीकृतम् इति । द्र.1.3.67.वा.2. व्या.म.भा., द्वि.ख., प्रदीप.पृ.178

किमर्थं दत्तः ? इति चेत् व्याख्यातारः वदन्ति– दृष्टान्तार्थम्[1] इति । अर्थात् , यथा – आरोहन्ति हस्तिनं हस्तिपकाः > आरोहयमाणो हस्ती इत्यत्र "णेरणौ..." (पा.सू) सूत्रं प्रवर्तते, तथैव आरोहन्ति हस्तिनं मनुष्याः > हस्ती स्थलमारोहयति मनुष्यान् इत्यत्रापि प्राप्नोति । तादृशातिव्याप्तिवारणार्थम् इदं वार्तिकं कर्तव्यम् इति । [ एतत्प्रघट्टकार्थः]

**द्वितीयप्रघट्टके वार्तिककारप्रदर्शितो विषयः**

द्वितीयप्रघट्टके "णेरणौ..."(पा.सू.) सूत्रस्य "कर्मवत्कर्मणा... "(पा.सू.) इत्यनेन अगतार्थता प्रतिपादिता । तथा हि –

कर्मवत्सूत्रेण गतार्थताशङ्कोपपादनम् , शङ्कोपपादनोपयोगितया "कर्मवत्..." सूत्रार्थादिविवरणम् यदि, अण्यन्तकर्मातिरिक्तकर्मणः ण्यन्ते असत्त्वे एव, अण्यन्तकर्मणः ण्यन्ते कर्तृत्वे सत्येव च "णेरणौ..." सूत्रं प्रवर्तते इत्यङ्गीक्रियते तदा "णेरणौ..." सूत्रं कर्मवत्सूत्रेण गतार्थं भवति, तर्हि णेरणौसूत्रं किमर्थम् ? इति शङ्का जायते । तथा हि –

अष्टाध्याय्यां तृतीयाध्याये प्रथमपादे "कर्मवत् कर्मणा तुल्यक्रियः[2]" (पा.सू.)इति एकं सूत्रमस्ति। "कर्मवत् कर्मणा तुल्यक्रियः" (पा.सू) इत्यस्य– "कर्मस्थक्रियया तुल्यक्रियः कर्ता कर्मवत् कार्याणि(=यक्–आत्मनेपद–चिण्–चिण्वदिटः) लभते" – इत्यर्थः ।

---

1 "अणौ कर्मणो णौ" कर्तृत्वप्रतिपादनाय पूर्ववाक्यम् "अरोहन्ति [हस्तिनं हस्तिपकाः]" इत्यादि । "आरोहयमाणः"इति तु दृष्टान्तार्थः । यथा तत्र आत्मनेपदं जातं तथा "आरोहयति" इत्यत्रापि स्यादिति । सति तु वार्तिके तत्र अतिप्रसङ्गो न भवति । ण्यन्ते कर्तृभूतहस्तिभिन्नस्य स्थलस्य मनुष्याणां च ण्यन्ते कर्मत्वसत्त्वात् । वार्तिकं हि ण्यन्तकर्तृभिन्नकर्मव्यावृत्तिपरम् , सूत्रस्य नियमार्थताकथनपरोत्तरवार्तिकस्वरसात् । अत एव "अनाध्याने" इति वर्तिककृतो नाभिमतम् , तत्र कर्मवद्भावाप्रसक्तेः । म.भा.प्र.व्या.1–3–67 (रत्नप्रकाश)

2 . अ.3–1—087/2766

**इदं सूत्रं कर्मस्थक्रियकेष्वेव[1] धातुषु प्रवर्तते न तु कर्तृस्थक्रियकेषु[2]** इत्यपि वार्तिक–भाष्यकाराभ्यां कर्मवत्सूत्रे उक्तम् – "तथा कर्मस्थभावकानां कर्मस्थक्रियाणां च, तथा कर्मस्थभावकानाम् ; कर्मस्थक्रियाणां च कर्ता कर्मवद् भवति इति वक्तव्यम् । कर्तृस्थभावकानाम् ; कर्तृस्थक्रियाणां च कर्ता कर्मवत् मा भूत् इति । कर्मस्थभावकानाम्—आसयति देवदत्तम् , शाययति देवदत्तम् , स्थापयति देवदत्तम् ।

कर्मस्थक्रियाणाम् – गाम् अवरुणद्धि, करोति कटम् ।

कर्तृस्थभावकानाम् – चिन्तयति मन्त्रयते ।

कर्तृस्थक्रियाणाम् – गच्छति, धावति, हसति इति ग्रन्थेन[3] ।

तेन "पचति तण्डुलं देवदत्तः > तण्डुलः पच्यते" इत्यादिकर्मस्थक्रियकप्रयोगे एव कर्मवद्भावः, न तु "पश्यन्ति भवं भक्ताः > पश्यति भवः" इत्यादौ कर्तृस्थक्रियकधातुप्रयोगे इति सिद्धम् ।

**इदं सूत्रं शुद्धधातुप्रयोगे इव ण्यन्तधातुस्थलेऽपि प्रवर्तते।** अयमंशः णेरणिसूत्रभाष्य – प्रदीपे प्रतिपादितः[4]। तथा हि– "लुनाति केदारं देवदत्तः" इति कक्ष्यायां विद्यमानस्य देवदत्तव्यापारस्य, सौकर्यविवक्षया अविवक्षायाम् , केदारव्यापारस्यैव प्राधान्यविवक्षायां "केदारः लूयते ( स्वयमेव)"[5] इति

---

1 यद्धातुवाच्यक्रियाकृतः कश्चन विशेषः तत्क्रियाकर्मणि उपलभ्यते सः धातुः कर्मस्थक्रियकः, यथा—पचि–भिद्यादिः, अत्र पचनादिक्रियाकृतस्य विक्लित्त्यादिरूपः विशेषः तत्क्रियाकर्मणि तण्डुलादौ कर्तुरसन्निधानेऽपि कालान्तरेऽपि दृश्यते ।

2 यद्धातुवाच्यक्रियाकृतः विशेषः कश्चिदपि तत्क्रियाकर्मणि नोपलभ्यते सः धातुः कर्तृस्थक्रियकः, यथा—दृशि–रुह्यादिः, अत्र दर्शनादिक्रियाकृतः विशेषः कश्चिदपि तत्क्रियाकर्मणि कर्तुरसन्निधाने कालान्तरे वा नोपलभ्यते ।

3 द्र. व्या.मा.भा.,3–1–87.वा.3 तृ.ख., पृ.118

4 द्र.1.3.67.वा.2. व्या.म.भा., द्वि.ख., प्रदीप.पृ.178

5 द्र.व्या.म.भा., वा.2. द्वि.ख., पृ.178 (प्रदीपः); "लूयते केदारः स्वयमेव, "आरुह्यते हस्ती स्वयमेव" इत्यादि "कर्मवत्…" सूत्रोदाहरणेषु "स्वयमित्यस्य "आत्मना" इत्यर्थकतया, तस्य कर्तृवाचकत्वेन " देवदत्तेन हस्ती आरुह्यते ( = न्यग्भाव्यते)" इतिवत् "आरुह्यते हस्ती स्वयमेव" इत्यपि कर्मणि प्रयोगः स्यात् , न तु कर्मकर्तृप्रयोगः। अतः कर्मकर्तृप्रयोगेषु "स्वयं" शब्दः न प्रयोक्तव्यः। काशिकावृत्त्यादिग्रन्थेषु एतत्सूत्रोदाहरणेषु "स्वयं" शब्दप्रयोगः प्रामादिक एव इत्याशयः कैयटादिभिः प्रथमं प्रकाशितः। ततः "स्वयं"शब्दः "आत्मना" इति करणवाचक "आत्मन् "शब्द समानार्थकः इति, कर्त्रन्तरव्यावृत्तिसूचनायैव

द्वितीयकक्ष्या भवति, अत्र ‘‘लू’’धातुः कर्मस्थक्रियकः, लूने अलूने च केदारे लवनक्रियाकृतविशेषस्य स्फुटं प्रतीयमानत्वात्। लूनाति केदारं देवदत्तः इति प्रथमकक्ष्यायां कर्मणि केदारे या क्रिया = द्विधाभवनरूपा, सैव ‘‘लूयते केदारः’’ इत्यत्र द्वितीयकक्ष्यायां केदारे अस्ति। अतः द्वितीयकक्ष्यायां कर्तुः केदारस्य "कर्मवत् ...’’(पा.सू.) सूत्रेण कर्मवद्भावे, ‘‘यक्’’ प्रत्यये आत्मनेपदे च ‘‘लूयते केदारः’’ इति प्रयोगो भवति। **इदं शुद्धधातौ कर्मवद्भावस्य उदाहरणम्।** इदानीं ‘‘लूयते केदारः’’ इत्यत्र पूर्वकक्ष्यातः परित्यक्तस्य कर्तृव्यापारस्य पुनः प्रयोजक-व्यापारत्वेन विवक्षायां ‘‘लू’’धातोः णिचि ‘‘लावयति केदारं देवदत्तः’’ इति तृतीयकक्ष्या भवति। ततः पुनः सौकर्यातिशयविवक्षायां प्रयोजककर्तृव्यापारस्यापि परित्यागे, प्रयोगात् प्रयोजकस्य निवृत्तिः भवति। केदार(कर्म)व्यापारस्यैव प्राधान्यविवक्षायां ‘‘लावयते केदारः’’ इति चतुर्थकक्ष्या भवति। अत्र -’’लावयति केदारं देवदत्तः’’ इति तृतीयकक्ष्यायां कर्मणि केदारे या द्विधाभवनरूपा क्रिया सैव ‘‘लावयते केदारः’’ इति चतुर्थकक्ष्यायां कर्मणि केदारे वर्तते। ‘‘लावयति’’ धातुरपि कर्मस्थक्रियक एव। अतः चतुर्थकक्ष्यायां केदारस्य कर्मवद्भावे आत्मनेपदे च ‘‘लावयते केदारः’’ इति प्रयोगः भवति। एवं देवदत्तः तण्डुलं पचति > **तण्डुलः पच्यते** > देवदत्तः तण्डुलं पाचयति> **तण्डुलः पाचयते**, इत्यादवपि ‘‘कर्मवत्...’’ सूत्रं भवति इति सिद्धम्।

**‘‘णेरणौ ...[1]’’ सूत्रस्य ‘‘कर्मवत् ...’’ सूत्रेण गतार्थत्वशङ्काप्रदर्शनम्**

यदा ‘‘कर्मवत्...’’ (पा.सू.) सूत्रं अण्यन्ते ण्यन्ते च प्रवर्तते तदा ‘‘णेरणौ...[2]’’ (पा.सू.) सूत्रोदाहरणेषु (आरोहन्ति हस्तिनं हस्तिपकाः> आरुह्यते हस्ती>आरोहयन्ति हस्तिनं हस्तिपकाः>) आरोहयते हस्ती इत्यादिप्रयोगेष्वपि पूर्वावस्थायां कर्मणि हस्तिनि या न्यग्भवनरूपा क्रिया तस्या एव उदाहरणकक्ष्यायां कर्तरि हस्तिनि सत्त्वात् ‘‘कर्मवत्...’’ (पा.सू.) सूत्रेणैव आत्मनेपदे, ‘‘आरोहयते हस्ती’’ इति सिध्यत्येव। यद्यपि, ‘‘णेरणौ ...’’(पा.सू.) सूत्रेण अणौ कर्मणः णौ कर्तृत्वे एव आत्मनेपदं विहितम् । एतं धर्मं (=अण्यन्तकर्मकर्तृकत्वम्) पुरस्कृत्य ‘‘कर्मवत् ...’’ (पा.सू.) सूत्रेण आत्मनेपदं न विहितम् , (‘‘पचत्योदनं देवदत्तः-राध्यत्योदनः स्वयमेव’’इत्यत्र शुद्धधातुभेदस्येव) प्रकृते अण्यन्त-ण्यन्तभेदेन धातुभेदस्य सत्त्वात् , धातुभेदे कर्मवद्भावस्य असम्भवात् , तथापि तत्र सर्वत्र पूर्वोक्तरीत्या तृतीयकक्ष्यायां **ण्यन्तधातौ** कर्मणि स्थितया क्रियया तुल्यक्रियः कर्ता चतुर्थकक्ष्यायां ण्यन्तधातौ अस्तीति ‘‘कर्मवत् ...’’ (पा.सू.) सूत्रेण आत्मनेपदं सिध्यत्येव । एवं ‘‘णेरणौ ...’’ (पा.सू.) सूत्रसाध्यप्रयोगाणां

---

‘‘स्वयं’’ शब्दः प्रयुक्तः, न तु स्वयं शब्दार्थस्य कर्तृत्वप्रतिपादनाय इति ज्ञेयम् इत्याशयश्च प्रदर्शितः। ततश्च कर्मवद्भावोदाहरणेषु ‘‘स्वयं’’शब्दः वस्तुतः न प्रयोक्तव्यः, क्वचित् प्रयुक्तश्चेत् कर्त्रन्तरव्यावृत्त्यर्थं प्रयुक्तः इति ग्राह्यम् इति सिद्धम् ।

[1] 3-1-087/2766

[2] 1-3-067/2738

"कर्मवत् ..." (पा.सू.) सूत्रेणैव सिद्धतया "णेरणौ ..." (पा.सू.) सूत्रं व्यर्थम् , तत् किमर्थमिदं कृतम् ? इति शङ्का वर्तते ।

**"णेरणौ..." सूत्रस्य "कर्मवत्..." सूत्रेण अगतार्थत्वनिरूपणम्**

एवं शङ्कायां वार्त्तिककारेण प्रथमतः एवं समाहितम्[1] – "सिद्धे सत्यारभ्यमाणो विधिः नियमाय कल्पते" इति न्यायेन "णेरणौ ..." (पा.सू.)सूत्रं नियमयति – यदि अणौ कर्मणः णौ कर्मत्वे ण्यन्तात् धातोः कर्मवत्कार्याणि (=यक्-आत्मनेपद-चिण्-चिण्वदिटः) स्युः, तर्हि आत्मनेपदमेव न तु यक्-चिणौ[2] – इति । अयमेवाशयः "कर्मवद्भावात् सिद्धम् इति चेत्–यक्-चिणोर्निवृत्त्यर्थं वचनम्[3]" इति वार्तिकेन प्रकाशितः । परन्तु तदुपरि शङ्का आगता – "न दुहस्नुनमां यक्-चिणौ[4]" (पा.सू.) इति सूत्रे "यक्चिणोः प्रतिषेधे हेतुमण्णि-श्रि-ब्रूञामुपसंख्यानम्[5]" इति वार्त्तिकस्य सत्त्वात् "आरोहयते हस्ती" इत्यादिप्रयोगेषु हेतुमण्यन्तात् यक्-चिणोः प्रतिषेधः सिध्यत्येव । तदर्थं "णेरणौ..." सूत्रं नावश्यकं खलु? इति । तस्य समाधानं वार्त्तिककृता उक्तम् – "आत्मनेपदप्रतिषेधार्थं तु[6]" इति ।

तस्य अयमाशयः— एवं यक्-चिणोः व्यावृत्तिसिद्धावपि अन्यादृशनियमार्थमिदं सूत्रमावश्यकमेव । तन्नियमाकारः एवम् – ण्यन्तात् धातोः कर्मवद्भावेन यदि आत्मनेपदं स्यात् तर्हि अणौ यत् कर्म, सः णौ कर्ता भवति चेदेव, णौ कर्मणः णौ कर्तृत्वे तु न कर्मवद्भावेन आत्मनेपदम् – इति । तेन "गणयति गोगणः" इत्यादौ न आत्मनेपदम् । तथा हि– गण्धातुः चुरादिण्यन्तः, "संख्यानपूर्वकं पृथक् करोति" इति तस्य अर्थः । अत्र "गणयति गोगणं गोपालकः" इति प्रथमकक्ष्या । संख्यानपूर्वकं विभज्य पृथक् स्थापयति इत्यर्थः । अयं कर्मस्थक्रिकः धातुः, संख्यानपूर्वकं विभज्य पृथक् स्थापनात् प्राक् तदनन्तरं च गोगणरूपे कर्मणि पृथक्स्थितिरूपस्य गणनक्रियाकृतस्य विशेषस्य दृश्यमानत्वात् । प्रथमकक्ष्यास्थस्य कर्तुः अविवक्षायां, कर्मणः गोगणस्य कर्तृत्वविवक्षायां च द्वितीयकक्ष्यायां "गणयति गोगणः" इति प्रयोगो भवति । अत्रापि "कर्मवत्..." सूत्रेण कर्मवद्भावे आत्मनेपदे च प्राप्ते "णेरणौ..." सूत्रेण अणौ

---

[1] इदं तु वार्त्तिककारसमाधानाशयवर्णनमात्रम् , न तु वार्त्तिककारस्य साक्षाद्वचनानि इमानि ।

[2] अनेन नियमेन आत्मनेपदरूपप्रत्ययस्यैव सङ्ग्रहात् व्यावृत्तिरपि तत्सजातीययोः यक्-चिण्रूपप्रत्यययोरेव । नतु अतादृशस्य चिण्वदिटः, इति नागेशादिभिः अन्यत्र विवृतम् । तेनात्र आत्मनेपस्दनियमेऽपि चिण्वदिट् भवत्येव । अत एव "यक्-चिणोर्निवृत्त्यर्थम्" इत्येव वार्त्तिककृता उक्तम् ।

[3] द्र. व्या.मा.भा. द्वि.ख.1-3-67 वा. 3, पृ.179

[4] 089-1-3/2767

[5] द्र. व्या.मा.भा. तृ.ख.,3-1-89. वा.1. पृ.125

[6] द्र. व्या.मा.भा. द्वि.ख. 1-3-67. वा.7.. पृ.180

कर्मणः णौ कर्तृत्वे एवात्मनेपदम् , इति नियमात् प्रकृते णौ कर्मण एव णौ कर्तृत्वात् आत्मनेपदं न भवति इत्याशयः । एवम् , द्वितीयकक्ष्यायां परित्यक्तस्य कर्तृव्यापारस्य पुनः प्रयोजक-व्यापारत्वेन विवक्षायां हेतुमण्णिचि "गणयति गोगणं गोपालकः" इति तृतीयकक्ष्या भवति । पुनः सौकर्यविवक्षया प्रयोजकव्यापारस्याप्यविवक्षायां चुरादिण्यन्तप्रकृतिकहेतुमण्णिच्सहिता "गणयति गोगणः" इति चतुर्थकक्ष्या भवति ।

अत्रापि तृतीय-चतुर्थकक्ष्ये आदाय "कर्मवत्..." सूत्रेण कर्मवद्भावे आत्मनेपदे च प्राप्ते "णेरणौ..." सूत्रेण अणौ कर्मणः णौ कर्तृत्वे एवात्मनेपदम् , इति नियमनात् , प्रकृते च प्रथमकक्ष्यामादाय वा तृतीयकक्ष्यामादाय वा णौ कर्मणः चतुर्थकक्ष्यायां णौ कर्तृत्वेऽपि अणौ कर्मणः णौ कर्तृत्वाभावात् आत्मनेपदं न भवति — इति । ततश्च "गणयति गोगणं गोपालकः > **गणयति गोगणः**" इत्यत्र आत्मनेपदव्यावृत्तिः णेरणौ...सूत्रस्य प्रयोजनमिति, इदं च णेरणौ...सूत्रं विना कर्मवत्... सूत्रमात्रेण न सिध्यतीति च वार्त्तिककाराशयः इति सिद्धम् । अत्र वार्त्तिककारस्य मते गणधातुः कर्मस्थक्रिकः, अत्र आत्मनेपदवारणार्थं णेरणौ...सूत्रम् इति वार्त्तिककाराशयः इत्यंशः वाक्यपदीये हेलाराजेनाप्युक्तः— "गणयति गणः स्वयमेवेत्यत्र तु आत्मनेपदनिवृत्त्यर्थं नियमार्थतया "णेरणौ" इति सूत्रं वार्त्तिककारेण स्थापितम् । न्यग्भवनं च विक्लितिवत् कर्मस्थमिति रुहिः कर्मस्थक्रियो वाक्यकारस्य कर्मवद्भावविषयः[1]" इति ।

**प्रकारान्तरेण वार्त्तिककाराशयपरिशीलनम्**

इदमत्रावधेयम् —"णेरणौ..." सूत्रे णेः इत्यत्र णिपदेन हेतुमण्णिच् वा स्वार्थणिच् वा इति विशेषं विना सर्वोऽपि णिच् गृह्यते । अतः हेतुमण्णिजन्तादिव स्वार्थणिजन्तेऽपि "णेरणौ..." इति आत्मनेपदनियमः प्रवर्तते इति वार्त्तिककाराशयः इति, कर्मस्थक्रियकधातुष्वेव कर्मवद्भावः इति सिद्धान्तितत्वात् आध्यानार्थकानां स्मरत्यादीनां च कर्मस्थक्रियकत्वाभावात् कर्मवद्भावाभावेनैव आत्मनेपदवारणे सिद्धे तदर्थं "णेरणौ..." इति सूत्रे "अनाध्याने" इति पदं च पाणिनिना न निवेशनीयम् इति वार्त्तिककारस्य गूढाशयः इति ।

**तृतीयप्रघट्टके वार्त्तिककारप्रदर्शितो विषयः**

**तृतीयप्रघट्टके** "आत्मा घातयति" इत्यादिनिवृत्तप्रेषणपक्षचतुर्थकक्ष्यारूपे प्रयोगे "णेरणौ..."(पा.सू.) सूत्रस्य **प्रसक्ता अतिव्याप्तिः** वारिता । तथा हि—

आत्मा(=देवदत्तादिः) आत्मानं हन्ति > आत्मा हन्यते > आत्मा आत्मानं घातयति > आत्मा घातयति इत्येवं क्रमेण निष्पन्ने "आत्मा घातयति" इति प्रयोगे "णेरणौ यत्कर्म णौ चेत्स कर्तानाध्याने"

---

[1] वाक्यपदीये साधनसमुद्देशे 60 कारिकायाः व्याख्यानस्य अन्ते द्रष्टव्यः ।

सूत्रं प्राप्नोति, यतोऽत्र "हन्"धातुः कर्मस्थक्रियकः अनाध्यानार्थकश्च, अण्यन्तकर्म णौ कर्ता जातः । अण्यन्तकर्मातिरिक्तकर्म णौ नास्ति, यतः प्रथमकक्ष्यायाम्-तृतीयकक्ष्यायां च – आत्मशब्दद्वयस्य सत्त्वेऽपि तत्प्रतिपाद्ययोः आत्मनोः वस्तुतः एकत्वेन तत्र भेदस्य दर्शयितुमशक्यत्वात् । परन्तु तत्र सूत्रप्रवृत्तिः नेष्यते । अतः एतदनिष्टवारणाय "**आत्मनः कर्मत्वे प्रतिषेधः**[1]" इति वार्त्तिककृता अपूर्ववाक्यं कृतम् । यदा "आत्मन्"शब्दवाच्यः अण्यन्ते कर्म भवति (ण्यन्ते स एव कर्ता च भवति)तदा "णेरणौ..." सूत्रस्य प्रतिषेधः वक्तव्यः इति तस्य वार्त्तिकस्य अर्थः । यदि—यद्यपि आत्मन्शब्दवाच्यः अण्यन्ते आत्मन्शब्दवाच्यस्य कर्मणः, ण्यन्ते आत्मन्शब्दवाच्यस्य कर्तुश्च वस्तुतः भेदो नास्ति । अपि च "आत्मा(=देवदत्तादिः) आत्मानं हन्ति" इत्यत्र आत्मन्शब्दस्य वाच्यः कर्म, देवदत्तशब्दस्य वाच्यः कर्ता च अभिन्नतया प्रतीयेते, तथापि क्वचित् देवदत्तादिवाचकशब्दकृतः भेदोऽपि तत्र प्रतीयेते एव । एवं वाचकशब्दोपाधिकृतं शरीर-अन्तःकरणाद्युपाधिकृतं वा भेदमाश्रित्य "आत्मा(=देवदत्तादिः) आत्मानं हन्ति" इत्यत्र अणौ कर्मतया स्थितः आत्मा अन्यः, "आत्मा घातयति" इत्यत्र णौ कर्तृतया स्थितः आत्मा च अन्यः[2] इति – व्याख्यायते तदा "आत्मा घातयति" इत्यत्र अणौ कर्मणः ण्यन्ते कर्तृत्वाभावात् नातिव्याप्तिः, तत्र अतिव्याप्तिवारणाय "आत्मनः कर्मत्वे प्रतिषेधः" इति वार्तिकं न कर्तव्यम्। अयमाशयोऽपि "न वा ण्यन्तेऽन्यस्य कर्तृत्वात्[3]" इति वाक्येन वार्त्तिककृता प्रकटितः" । न वा= "आत्मनः कर्मत्वे प्रतिषेधः[4]" इति वार्तिकं नैव कर्तव्यम् , "आत्मा घातयति" इत्यत्र ण्यन्ते अण्यन्तकर्मान्यस्यैव कर्तृत्वात् , अण्यन्तकर्मणः कर्तृत्वाभावात् इति "न वा ण्यन्तेऽन्यस्य कर्तृत्वात्" इति वाक्यस्य अर्थः ।

**अत्र वार्त्तिककारस्य गूढाश यः**

"आत्मा आत्मानं हन्ति" इति प्रथमकक्ष्यायां कर्मभूतःआत्मा शरीरावच्छिन्नः, "आत्मा घातयति" इति चतुर्थकक्ष्यायां तु आत्मा अन्तः करणावच्छिन्नः आत्मा इति मत्वा अणौ कर्मणः कर्तृत्वाभावात्

---

[1] द्र. व्या.मा.भा., द्वि.ख.1-3-67.वा.8, पृ.182

[2] आत्मा(=देवदत्तादिः) आत्मानं हन्ति इत्यत्र देवदत्तादिशब्दोपाधिकः अन्तःकरणोपाधिको वा आत्मा कर्तृत्वेन विवक्षितः, आत्मन्शब्दोपाधिकः शरीरोपाधिको वा आत्मा कर्मत्वेन विवक्षितः, "आत्मा घातयति=स्वयमेव हिंसाविषयो भवति" इत्यत्र तु देवदत्तादिशब्दोपाधिकः अन्तःकरणोपाधिको वा आत्मा कर्तृत्वेन विवक्षितः, न तु अणौ कर्मभूतः आत्मा अत्र कर्तृत्वेन विवक्षितः । अतः अणौ कर्मणः णौ कर्तृत्वाभावात् णेरणौ ... सूत्रस्य प्राप्तिरेव नास्ति । अतः तद्वारणाय वार्तिकं न कर्तव्यम् इति भावः ।

[3] द्र. व्या.मा.भा., द्वि.ख.1-3-67.वा.9, पृ.183

[4] द्र. व्या.मा.भा., द्वि.ख.1-3-67.वा.8, पृ.182

वार्तिकं विनैव आत्मनेपदाभावः सिध्यति । एवमुभयत्र आत्मनोर्भेदे आत्मनेपदाभावः स्वतः सिध्यतु नाम।

**परन्तु** यदि “आत्मा आत्मानं हन्ति” इत्यत्र विद्यमानं कर्मैव “आत्मा घातयति” इत्यत्र कर्तृत्वेन विवक्ष्यते, तदा अणौ कर्म णौ कर्ता जात इति कृत्वा आत्मनेपदमनिवार्यमेव खलू? इति शङ्का जायते । तस्याः समाधाननं तु व्याख्यातृभिः एवमूहितम्— तथा विवक्षया तादृशप्रयोगः शिष्टव्यवहारे नास्ति । शिष्टप्रयुक्तेष्वेव शास्त्रं प्रवर्तते, न अतादृशेषु, “यथालक्षणमप्रयुक्ते” = अप्रयुक्तशब्देषु लक्षणस्य अप्रवृत्तिरेव, अतः तादृशप्रयोगेषु अतिव्याप्तिः न आपादनीया इति वार्तिकारस्याशयः इति । वार्त्तिककारस्य लक्ष्यैकचक्षुष्कत्वात् तादृशप्रयोगः शिष्टव्यवहारे नास्ति इति वक्तुं सः प्रभवत्येव इति ।

**उपसंहारः**

तथा च वार्त्तिककाररीत्या अत्र सूत्रे विषयत्रयं प्रतिपादितमस्ति –

1. “आरोहन्ति हस्तिनं मनुष्याः > हस्ती मनुष्यान् आरोहयते” इत्यत्र “आरोहयमाणो हस्ती स्थलमारोहयति मनुष्यान्” इत्यादौ च सूत्रस्य अतिव्याप्तिवारणमेको विषयः ।

2. “कर्मवत्…”सूत्रेणैव सिद्धे “णेरणौ...” सूत्रं नियमार्थम् । तेन “गणयति गणं गोपालकः > गणयति गणः स्वयमेव” इत्यादौ “णेरणौ...” सूत्रं न प्रवर्तते इति द्वितीयः विषयः । ततश्च अकर्मक-कर्मस्थक्रियक-ण्यन्तधातुघटितप्रयोगा एव अस्य सूत्रस्य उदाहरणानि इति,

3. “आत्मा (=देवदत्तः) आत्मानं हन्ति > आत्मा घातयति” इत्यादौ “णेरणौ...” सूत्रवारणं तृतीयो विषयः इति ।

**भाष्यकारास्तु—**

1. “णेरणौ …इति सूत्रे” अणौ यत् कर्म णौ चेत् सः कर्ता” इत्यंशे “अणौ यत् कर्म णौ चेत्” इति भागं पृथग्वाक्यं कृत्वा तेन प्रथमप्रघट्टकवार्तिकोक्तार्थं संसाध्य वार्तिकं प्रत्याख्यातवन्तः[1] ।

[1] अत एव “अणौ यत्कर्म णौचेत् इति वाक्यं विभज्य वार्तिकं प्रत्याख्यातवतः भाष्यकारस्य आशयवर्णनकाले एतद्भाष्यव्याख्याने प्रदीपे —भाष्यकारस्तु वाक्यभेदाश्रयेणैतमर्थं साधयति-“णेरात्मनेपदं भवति” इत्येकं वाक्यम्। ततः “अणौयत्कर्म णौ चे”दिति द्वितीयम् । अत्र वाक्ये यत्तादोर्नित्यसम्बन्धाद्यच्छब्देन तच्छाब्द आक्षिप्यते । धर्मान्तरस्य चानिर्देशात् कर्मत्वमेव सन्निधानात्प्रतिनिर्दिश्यते । “अणौ यत्कर्म णौचेत्तत्कर्मे”ति प्रतिनिर्देशेन च कर्मान्तरव्यावृत्तिः क्रियते, न त्वणौ कर्मणो णौ कर्मत्वसद्भावः प्रतिपाद्यते “स कर्ते”ति वाक्यान्तरेण तस्य कर्तृत्वप्रतिपादनात् , युगपदेकक्रियापेक्षया कर्मत्व-कर्तृत्वविरोधादेकस्य । यथेष्टं वाक्यशेषपरिकल्पनात् अणौ यत्

2. **द्वितीयप्रघट्टक**वार्तिकोक्तमर्थं सर्वथा नाङ्गीकृतवन्तः । कर्मवद्भावप्राप्तियोग्यतारहिते सकर्मक-कर्मस्थक्रियक-ण्यन्तधातुघटितप्रयोगे, अकर्मक-कर्तृस्थक्रियक-ण्यन्तधातुघटितप्रयोगे च अपूर्वतया आत्मनेपदविधानार्थमिदं सूत्रम् इत्युक्तवन्तः[1] । किंच "गणयति गणं गोपालकः > गणयति गणः स्वयमेव" इति वार्तिकाङ्गीकृतः परस्मैपदघटितः प्रयोगः न साधुः इत्युक्तवन्तः । अत्र व्याख्यातृभिः "यथोत्तरं मुनीनां प्रामाण्यम्" इत्युक्त्वा भाष्यकाराङ्गीकृत एव प्रयोगः अस्माभिरादर्तव्यः इत्युक्तम् ।

3. **तृतीयप्रघट्टके** वार्त्तिककारकृतम् "आत्मा आत्मानं हन्ति" > "आत्मा घातयति" इत्यत्र आत्मनेपदवारणं तथैवाङ्गीकृतवन्तः । एवम् , "आत्मा आत्मानं हन्ति > आत्मा आत्मानं घातयति" इति अध्यारोपित-प्रेषणद्वितीयकक्ष्यायामपि."णेरणौ ...इति सूत्रेण आत्मनेपदं न भवतीति तृतीयप्रघट्टकस्थभाष्यकाराशयः इति भाष्यव्याख्यातृभिरुक्तम् । अत्र भास्यकाराशयः अतिसंक्षिप्ततयैव प्रदर्शितः । परन्तु सः बहु विवरणमपेक्षते । अत्र वार्त्तिककाराशयवर्णनस्यैव प्रस्तुतत्वात् यथाशक्ति तत्रैव कश्चित् प्रयत्नः विहितः इत्युक्त्वा एतावता विरमामि ।

---

कर्म णौ चेत्तदेव कर्मेति एवकाराध्याहारात् कर्मान्तरनिवृत्तिलाभः । ततः "स कर्ते"ति तृतीयं वाक्यम् अणौ कर्मणो णौ कर्तृत्वप्रतिपादनपरम् । एवमेषां वाक्यानामेकवाक्यत्वे महावाक्यं लक्ष्यसंस्कारकं सम्पद्यते" इत्युक्तम्।

[1] अत एव एतद्भाष्यव्याख्याने प्रदीपे "भवत्येवञ्जातीयकानामिति" इति प्रतीकमादाय — "येषामण्यन्तानां यत्कर्म तेषां ण्यन्तानां यदा स कर्ता तदा कर्तृस्थभाव-क्रियत्वेऽप्यात्मनेपदं भवतीत्यर्थः । एवं च ब्रुवता भाष्यकारेण सूत्रमेतद्विध्यर्थमिति अर्थादुक्तं भवति । तेन "आरोहयते हस्ती"त्यादावनेनैवात्मनेपदं सिद्धं भवति ... एवं च कर्तृस्थक्रियत्वान्नास्त्यत्र कर्मवद्भावः" इत्युक्तम् । ततः "दर्शयते भृत्यान् राजेति" इति प्रतीकमादाय — " ननु कर्मान्तरसद्भावात् अत्रात्मनेपदेन न भाव्यम् । उच्यते, अस्मादेवोदाहरणात् भाष्यकारस्यायमभिप्राय ऊह्यते-अण्यन्तावस्थायां ये कर्तृकर्मणी तद्व्यतिरिक्तकर्मान्तरसद्भावे आत्मनेपदं न भवति - यथा स्थलमारोहयति मनुष्यानिति । इह तु="दर्शयते भृत्यान् राजे"त्यत्र ण्यन्तावस्थायां कर्तृणां भृत्यानां णौ कर्मत्वमिति भवत्येवात्मनेपदम् । एवं च स्मरयत्येनं वनगुल्मः स्वयमेवेति कोकिलस्य कर्मत्वेपि प्रत्युदाहरणं युज्यते" इत्युक्तम्।

# जराया जरसन्यतरस्याम् ( ७.२.१०१ )

विद्वान् तेजःपालशर्मा, पुरी

त्रिपदमिदं सूत्रम् । अस्मिन् सूत्रे "अष्टन आ विभक्तौ" (७.२.८४) इति सूत्रात् "विभक्तौ" इति पदम् "अचि र ऋतः" (७.२.१००) इति सूत्रात् "अचि" इति पदञ्च अनुवर्त्तते । प्रकृते "अचि" इत्यल्–बोधकं सप्तम्यन्तं पदं विशेषणम् "विभक्तौ" इति च विशेष्यम् , तथा च "यस्मिन् विधिस्तदादावल्ग्रहणे" इति परिभाषया अजादौ विभक्तौ परतः इत्यर्थः उपलभ्यते । अत्र सूत्रे "अङ्गस्य" इति अधिकृतम् । अङ्गस्य इति विशेष्यम् , जराया इति विशेषणम् अतो "येन विधिस्तदन्तस्य" इति तदन्तविधौ, तेन जराशब्दान्तस्य अङ्गस्य इत्यर्थो लभ्यते "अङ्गस्य" इति स्थानषष्ठ्या निर्दिश्यमानपरिभाषोपस्थित्या अस्य सूत्रस्य –

"जराशब्दान्तस्य अङ्गस्य यो निर्दिश्यमानः अजादिविभक्त्यव्यवहितपूर्वः तस्य जरसादेशो भवति विकल्पेन" इत्यर्थो जायते ।

तथा जराशब्दाद् औ विभक्तौ परतः जरसादेशविधानेन जरसौ इति रूपस्य सिद्धिर्भवति ।

नचात्र अर्धमात्रालाघवाय असुङ् एव विधीयताम् इति वाच्यम् ।

असुङः विधाने स्वीक्रियमाणे ङकार–उकारयोः इत्सञ्ज्ञा–लोपयोः विधानम् अनेकाल्शित्सर्वस्येति प्रबाध्य अलोऽन्त्यस्य तं प्रबाध्य "ङिच्च" इत्यनुसन्धाने ज्ञानगौरवम् आपतति । तस्मात् प्रतिपत्तिलाघवाय "जराया असुङ्" इति नोक्तम् ।

ननु जराशब्दात् "तत्करोति तदाचष्टे" इति णिचि टिलोपे "जरि" इति धातोः जरयति इति विग्रहे कर्त्तरि क्विपि णिलोपे जर् इत्यस्मात् औ विभक्तौ आनुमानिकस्थान्यादेशभावमादाय जरसादेशे कृते जरसौ इति रूपम् , अथ च असुङि विधाने जसौ इति रूपभेदस्यापि सत्वात् असुङ् विधानं न कृतम् ।

इदं सूत्रं निर्जरशब्दरूपसिद्धिप्रक्रियावसरे सिद्धान्तकौमुद्याम् उपात्तम् –

तथा चात्र "निर्जर टा" इत्यत्र जरशब्दान्तम् अङ्गम् न तु जराशब्दान्तम् इत्याशङ्क्य उक्तम् "एकदेशविकृतमनन्यवत्" इति परिभाषया जरशब्दस्यापि जरारूपत्वं स्वीक्रियते अतोऽत्र जरसादेशो भवति । नन्वत्र "निर्जर + आ" इत्यत्र "टाङसिङसामिनात्स्याः" इति सूत्रेण इनादेशः स्यादिति वाच्यम् ?

"जराया जरसन्यतरस्याम्" इति सूत्रस्य "जरसौ" इत्यत्र अवकाशः "टाङसिङसामिनात्स्याः" इत्यस्य च रामेण इत्यत्र अवकाशः । तथा च अन्यत्रान्यत्रलब्धावकाशयोः "निर्जर+टा" इत्यत्र कतरेण भाव्यम् इत्याकाङ्क्षायाम् "विप्रतिषेधे परं कार्यम्" इत्यनेन "जराया जरसन्यतरस्याम्" इत्यस्य प्रवृत्तिर्भवति । अत एव कौमुद्याम् – "इनादीन् बाधित्वा परत्वाज्जरस् – निर्जरसा, निर्जरसे, निर्जरसः"

इत्युक्तम् । न चात्र जरसादेशस्य स्थानिवद्भावेन अदन्तत्वमादाय विभक्त्यादेशः स्यादिति वाच्यम् ‘‘अनल्विधौ’’ इति तन्निषेधात् । एतत्सर्वं भाष्यसम्मतम् ।

वृत्तिकृता तु ‘‘पूर्वविप्रतिषेधेन इनातोः कृतयोः सन्निपातपरिभाषाया अनित्यत्वमाश्रित्य जरसि कृते निर्जरसिन निर्जरसात् इति रूपे भवतः ; न तु निर्जरसा, निर्जरसः इति केचित् इत्युक्तम् ‘‘ तथा भिसि निर्जरसैरिति रूपान्तरमुक्तम् , तदनुसारिभिश्च षष्ठ्येकवचने निर्जरस्य इत्येव रूपमिति स्वीकृतम् । एतच्च भाष्यविरुद्धम् इति कौमुदीकारेण उक्तम् ।

अत्र वृत्तिकारशब्देन कस्य ग्रहणम् – इति विषये काशिकावृत्तौ तथा उक्तम् ।

लक्ष्मीटीकायाम् – माधवेन धातुवृत्तौ ‘‘अतिजरसिन, अतिजरसात्’’ इति केचित् इत्युक्तम् एतेन नेदं माधवमतम् इति प्रतीयते ।

प्रक्रियाकौमुद्यामपि केचिदित्यस्य भाष्यकारभिन्नाः इत्येव अर्थो विहितः ।

परे तु ‘‘विभक्त्यादेशेभ्यः परत्वाज्जरस्’’ इत्यसङ्गतम् विभक्त्यादेशानामेव पूर्वविप्रतिषेधेन इष्टत्वात् । अत एव ‘‘जरायाः०’’ इति सूत्रे ‘‘अतिजरांसि’’ इत्यत्र नुम्–जरसोः प्राप्तयोः विप्रतिषेधेन जरस् इति भाष्योक्तं संगच्छते । अर्थात् ‘‘अतिजर + जस्’’ इत्यत्र शयादेशे कृते सर्वनामस्थानसंज्ञायां सत्यां नुमागमः प्राप्नोति एतेन विभक्त्यादेशः पूर्वं भवति इत्येव सिध्यति इति नव्याः ।

प्राञ्चस्तु – ‘‘अतिजर + जस्’’ इत्यवस्थायां जरसादेशशीभावयोः प्राप्तौ परत्वात् जरस् भवति । नित्यत्वात् शीभावः कथन्न इत्याशङ्किते जरसादेशस्यापि नित्यत्वात् उभयोःसाम्येन परत्वात् जरस् इति समाहिते । कथं जरसो नित्यत्वम् , यतो हि शीभावे कृते नुमः प्रवृत्त्या निर्दिश्यमानस्य नुमा व्यवधानात् जरसादेशस्य अप्राप्त्या जरसो नित्यत्वं वक्तुमशक्यत्वात् इत्याशङ्क्य ‘‘नुम्–जरसोः’’ प्राप्तयोः विप्रतिषेधेन जरस् एवेति विचारपरम् एतद्भाष्यम् , तथा च अनेन भाष्येण विभक्त्यादेशानां पूर्वविप्रतिषेधेन इष्टत्वप्रतिपादनम् असङ्गतम् ।

एवन्तर्हि ‘‘टाङसिङसामिनात्स्याः’’ इति सूत्रस्थं भाष्यं विभक्त्यादेशानां जरसादेशापेक्षया पूर्वविप्रतिषेधेन विधाने प्रमाणम् –

तत्र भाष्यकारः सन्निपातपरिभाषया जरसादेशम् अनभ्युपयन् ‘‘अतिजरेण, अतिजरात्’’ इति भाव्यम् न तु ‘‘अतिजरसिन, अतिजरसात्’’ इति ‘‘गौरवमुद्भावितवान्’’ इति । भवद्रीत्या पूर्वं जरसादेशे इनाद्यप्राप्त्या तदभावपक्षे च तस्याप्राप्त्या ‘‘सन्निपातपरिभाषया जरसादेशम् अनभ्युपयन्’’ इत्यस्यासङ्गतिः स्पष्टैव इति । अर्थात् परत्वात् जरसादेशस्यैव इष्टत्वे जरसादेशे कृते अदन्ताङ्गाऽभावात् इनाद्यप्राप्त्या वैकल्पिकात् तदभावपक्षे जरसादेशाऽप्राप्त्या सन्निपातपरिभाषया जरसादेशम् अनभ्युपयन् इति उक्तेरसङ्गत्यापत्तिर्भवतीति भावः । ‘‘टाङसिङसामिनात्स्याः’’ इति सूत्रस्थ भाष्यमपि परत्वाज्जरस्विधाने असङ्गतं न भवतीति प्राञ्चः –

यतो हि "अतिजर + आ" इत्यत्र जरसोऽभावे इनादेशे कृते "अतिजर + इन" "अतिजर + आ" इति लक्ष्याद् रूपान्तरं प्रापिते अत्रापि जरसादेशप्राप्तेरव्याहतत्वेन सन्निपातपरिभाषया जरसादेशस्य अभावप्रतिपादनं, नाऽसङ्गतम् ।

"विभाषा श्वेः" (६.१.३०) इति सूत्रस्य भाष्यम् प्रमाणम् तत्र सम्प्रसारणाऽभावे द्वित्वे कृते लक्ष्याद् रूपान्तरं प्रापिते श्वयतेरभ्यासस्य पुनरपि संप्रसारणं प्राप्नोति तन्निषेधाय "श्वेर्लिट्यभ्यासलक्षणप्रतिषेधः" इति वार्तिकम् उक्तम् इति ।

तथा चोक्तभाष्याभ्यां जरसादेशात् पूर्वं विभक्त्यादेशकल्पनम् असङ्गतम् ।

# उरण् रपरः

विद्वान् चिन्तलपाटि सत्यनारायणशास्त्री, कालटी

भगवता पाणिनिना प्रणीतायाम् अष्टाध्याय्यां प्रथमाध्याये प्रथमपादे पञ्चाशत्तमं इदं सूत्रम् । उः अण् रपरः इति पदच्छेदः, त्रिपदम् इदं सूत्रम् अत्र उः इति षष्ठ्यन्तमिति कृत्वा, "षष्ठी स्थाने योगा" इति सूत्रात् स्थाने इति पदम् उपतिष्ठते । "स्थानेन्तरतमः" इति सूत्रात् स्थाने इति पदं अनुवर्तते, तस्य च प्रसङ्गे इत्यर्थः । तथा च उः स्थाने प्रसङ्गे सति अण् रपरः सन् प्रवर्तते इत्यर्थः । रपरः इत्यस्य रः परः यस्य सः इति षष्ठ्यर्थ बहुव्रीहिः, अत्र च परः इति अवयव वाचकः शब्दः, एवञ्च ऋकारस्य स्थाने रेफशिरस्कः अण् प्रवर्तते इति सूत्रार्थः । रेफस्य अणवयवत्वेन "यदागमास्तद्गुणीभूताः तद्ग्रहणेन गृह्यन्ते" इति परिभाषया रेफस्य अकाररूपेण ग्रहणं कर्तव्यम् । अत एव ऋकारस्य गुणः भवति वृद्धिर्भवति इत्युक्ते रेफशिरस्कः अकारः अभिनिर्वर्तते इति रदाभ्यां इति सूत्रे भाष्योक्तिः संगच्छते ।

अथ दल कृत्यं विचार्यते । अत्र उः इति पदाभावे अण् रपरो भवति इत्येवार्थः सिद्ध्येत् तथासति खेयम् इति रूपं न सिद्ध्येत् । खन धातोः "ईचखनः" इति सूत्रेण न कारस्य ईकारे क्यप् प्रत्यये च आद्गुणे खेयम् इति रूपम् – अण् रपर इत्येतावदुक्ते, अत्रापि रपरत्वं प्रसज्येत । एवं अण् पदाभावे, ऊरपरः इति सूत्रं स्यात् , तथा च ऋकारस्य स्थाने यो यः आदेशः सः सर्वोऽपि रपरः इत्यर्थः स्यात् । तथा सति बहुत्र रपर प्रतिषेधो वक्तव्यः स्यात् । तदेवोक्तम् भाष्ये "आदेशो रपर इति चेत् रीरिविधिषुरपरत्वस्य प्रतिषेधो वक्तव्यः" इति ।

के पुनः रीरिविधयः इति प्रश्ने "अकङ्लोपानङानङ्रीङ्रिङादेशाः" ।

१. सुधातृ शब्दात् सुधातुरकङ् च इति सूत्रेण ऋकारस्य स्थाने अकङ् विहितः इञ् प्रत्ययश्च सौधातकिः इति न सिध्येत् ।
२. लोपः– पितृस्वसृ शब्दात् ढक् प्रत्ययः लोपश्च विहितः (ऋकारस्य) पैतृष्वसेयः इति रूपं सिध्यति । अत्रापि रपरत्वं प्रसज्येत ।
३. होतापोतारौ इत्यत्र होतृशब्दस्य आनङ् विहितः सोऽपि रपरः स्यात् ।
४. हर्ता कर्ता इत्यादौ ऋदुशनस्पुरुदंसोनेहसाञ्च इति अनङ् विहितः सोऽपि रपरः स्यात् ।
५. मात्रीयति पित्रीयति इत्यत्र ऋकारस्य रीङ् विहितः सोऽपि रपरः स्यात् ।

अतः एषु स्थलेषु सर्वत्र रपरत्ववारणाय सूत्रे अणपदम् आवश्यकम् । अत्र सर्वत्र अण् नास्तीति नातिप्रसङ्गः । अत्र अण् इति पूर्वेण णकारेणैव प्रत्याहारः । अयञ्च विषयः "प्रशास्तृणाम्" इति पाणिनि निर्देशात् ज्ञायते । यदि परेण णकारेण प्रत्याहारः प्रशास्तृ इत्यत्र ऋकारस्थाने विहितः नामि इति दीर्घः रपरः प्रसज्येत, तथा नोक्तमिति कृत्वा पूर्वेण णकारेणैव अण् प्रत्याहारः । अथ रपरः इत्यत्र र इत्यस्य

कोर्थः ? र इत्यनेन रेफः लकारश्च गृह्यते, कथम् ? लण् सूत्रे अकारस्य इत्संज्ञा विहिता, तेन हयवरट्सूत्रस्थरेफादारभ्य अकारपर्यन्तं प्रत्याहारः गृह्यते, कथमिदं सिध्यतीति चेत् तुल्यास्य प्रयत्नं सवर्णं इति सूत्रे "ऋऌवर्णयोः सवर्णविधिः" इति वार्तिकम् । किं प्रयोजनं इति प्रश्ने होतृ ऌकारः इत्यत्र अकः सवर्णे इति दीर्घे होतॄकारः इति रूपसिद्धिः इत्युक्तं तर्हि अनयोः सवर्ण संज्ञायां उरण् – रपर सूत्रे ऋ इत्यनेन त्रिंशद्वर्णानां ग्रहणप्रसक्तिः । ऌकारस्य स्थानेऽपि रपरत्वप्रसक्तिः इत्याक्षेपः । तत्समाधानतया लपरत्वं वक्ष्यामीति भाष्यकारवचनम् , तस्यायमर्थः उरण् रपर इत्यनेन ऋकारस्य ऌकारस्य च रपरत्वं उच्यते इति र इति प्रत्याहारेण रलौ गृह्येते । ऋकारस्य स्थाने रेफपरकत्वं ऌकारस्य लकारपरकवञ्चानेन उच्यते इत्यर्थः । तथा च उरण् रपरः इति सूत्रेण ऋकारऌकारयोः स्थाने प्रसङ्गावस्थायामेव अण् रपरः लपरश्च भवति इति सूत्रार्थः । अत एव सिद्धान्तकौमुद्यां कृष्णर्द्धिः तवल्कारः इत्यादिरूपप्रदर्शनं, द्वित्वं लस्यैव कस्यैव नोभयोरुभयोरपि । तवल्कारादिषु बुधैः बोध्यंरूपचतुष्टयम् । इति च संगच्छते ।

# अष्टाभ्य औश्

(अष्टन्–स्वरविचारः)

**विद्वान् सि.यस्.यस्. नरसिंहमूर्तिः, शृङ्गगिरिः**

येनाक्षरसमाम्नायमधिगम्य महेश्वरात् ।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥

"अष्टन आ विभक्तौ" (७–२–८४) इति सूत्रमष्टाध्याय्यां सप्तमाध्याये विद्यते । एतदनन्तरसूत्रमस्ति – "रायो हलि" इति । उभेऽपि सूत्रेऽऽत्त्वविधायके । "ष्णान्ता षट्" इति सूत्रे भगवता भाष्यकारेण "हलीत्युभयोः शेषः" इति कथनात् हलीति अत्रापकृष्यते । तच्च हलीतिपदं विभक्तौ इत्यस्य विशेषणम् । तेन यस्मिन् विधिस्तदादावल्ग्रहणे" इति परिभाषया तदादिविधिः । एवञ्च अष्टनः आत्वं भवति हलादौ विभक्तौ इति सूत्रार्थो लभ्यते । अष्टाभिः इत्युदाहरणम् । अष्टन् शब्दः नित्यबहुवचनान्तः । ततः तृतीयाबहुवचने भिस् प्रत्यये, अनेन सूत्रेण हलादिविभक्तिपरकत्वेन नकारस्य आत्वे, सवर्णदीर्घे, रुत्वे, विसर्गे, अष्टाभिः इति रूपं सिद्ध्यति । एवमेव अष्टाभ्यः इति रूपमपि भवति । षष्ठीबहुवचने अष्टन् + आम् इति स्थिते, हलीत्यपकर्षस्याङ्गीकारात् आदौ "षड्चतुर्भ्यश्च" इति षड्सं ज्ञां निमित्तीकृत्य आमः नुडागमः प्रवर्तते । अष्टन् + नाम् इति स्थिते सम्प्रति हलादिविभक्तिपरकत्वेन आत्वे, सवर्णदीर्घे अष्टानाम् इति रूपं सिद्ध्यति ।

अत्रेयं शङ्का – अष्टन् + नाम् इत्यवस्थायाम् "अष्टन आ विभक्तौ" इत्यनेन आत्वं न भवति । नुमागमः नान्तसंख्यावाचकषट्संज्ञां निमित्तीकृत्य प्रावर्तत । आत्वे नान्तत्वं नश्यति । अतः सन्निपातपरिभाषया नान्तसंख्यावाचकत्वं निमित्तीकृत्य प्रवृत्तः नुडागमः तद्विघातक आत्वं प्रति निमित्तं न भवति इति आत्वाप्रवृत्तौ अष्टानाम् इति रूपं न सिद्ध्यति ।

अत्रेदमुत्तरम् – "शमामष्टानां दीर्घः शयनि" इति निर्देशात् एतद्विषये सन्निपातपरिभाषा न प्रवर्तते इत्यभ्युपगमात् आत्वं प्रवर्तते । एवम् अष्टानाम् इति रूपसिद्धिः हलीत्यपकर्षस्य प्रयोजनम् ।

सन्निपातपरिभाषायाः अनित्यत्वेन अष्टानाम् इति रूपसाधनं किमर्थम् ? प्रकारन्तरेण तच्च रूपं साधयामः – अष्टन् + आम् इति स्थिते षड्पतुर्भ्यश्च इति नुडागमो भवति । तदा "नोपधायाः"(नान्तस्य उपधायाः दीर्घः स्यान्नामि परे) इत्यनेन उपधादीर्घे, हलादिप्रत्ययपरकत्वेन पदसंज्ञायां "न लोपः प्रातिपदिकान्तस्य" इति नलोपे अष्टानाम् इति भवति । अत्रापि नान्तसंख्यावाचकत्वं निमित्तीकृत्य जायमानो नुडागमः तद्विघातकनलोपं प्रति निमित्तं न भवति इति सन्निपातपरिभाषाविरोधात् नलोपः न प्राप्नोति खलु –

उच्यते – सन्निपातपरिभाषा कृन्मेजन्तः इति सूत्रे भाष्ये पठिता । अतः सपादसप्ताध्यायीस्थत्वं परिभाषायाः, "न लोपः प्रातिपदिकान्तस्य" (८–२–७) इति सूत्रं त्रिपाद्यां वर्तते । "पूर्वत्रासिद्धम्" इति

सूत्रेण सपादसप्ताध्यायीं प्रति त्रिपाद्याः असिद्धत्वबोधनात् परिभाषादृष्ट्या (नलोपस्य असिद्धत्वेन) नकारस्य विद्यमानत्वेन सन्निपातविघातः तत्र नास्ति इति वक्तुं शक्यते । अथवा "षट्चतुर्भ्यश्च" (७–१–५५) इति नुडागमदृष्ट्या नलोपस्यासिद्धत्वेन न सन्निपातविघात इति वक्तुं शक्यते च ।

पूर्वोक्तरीत्या नलोपस्यासिद्धत्वेन सन्निपातविघातो नेति वक्तुं न शक्यते । तथा सति "कृन्मेजन्तः" इति सूत्रभाष्यविरोधः । तत्र हि – हे गौरि इत्यत्र हे गौरी + सु इति स्थिते गौरीत्यस्य नदीसंज्ञायाम् अम्बार्थनद्योर्ह्रस्वः (अम्बार्थानां नद्यन्तानां च ह्रस्वः स्यात् सम्बुद्धौ ) इत्यनेन सम्बुद्धिं निमित्तीकृत्य ह्रस्वे, एङ्ह्रस्वात् सम्बुद्धेः इत्यनेन सुलोपे हे गौरि इति रूपं भवति । तत्र भाष्यकारः सम्बुद्धिं निमित्तीकृत्य जायमानः ह्रस्वः तद्विघातकसुलोपं प्रति निमित्तं न भवेत् इत्याशङ्क्य "नदीह्रस्वत्वं सम्बुद्धिलोपस्य" इति नात्र सन्निपातपरिभाषा प्रवर्तत इत्युक्तम् ।

भवदुक्तरीत्या तत्रापि प्रत्ययलक्षणेन सम्बुद्धिः भवतीति चिन्तयति चेद्भाष्यकारः तत्रातिव्याप्तिं किमर्थं प्रत्यपीपदत् ?

किञ्च पूर्वत्र कर्तव्ये परस्यासिद्धत्वं पूर्वत्रासिद्धम् इत्यनेन बोध्यते, परे कृते तस्य पूर्वदृष्ट्या असिद्धत्वं न कदापि बोध्यते । अतः प्रकारान्तरेण रूपं न सिद्ध्यति ।

अन्यथा (हलीत्यपकर्षाभावे) अष्टन् + आम् इति स्थिते नुट्, आत्वयोः प्राप्तौ षट्चतुर्भ्यश्च (७–१–५५) अष्टन आ विभक्तौ(७–२–८४) इति, उभयोः मध्ये परत्वात् आत्वं प्राप्नोति, एवं नित्यत्वादपि प्राप्नुयात् । यतो हि नुडागमे कृतेऽकृतेऽपि आत्वस्य प्राप्तिः विद्यते । अतः आत्वे नान्तत्वाभावात् षट्संज्ञायाः अभावान्नुडागमो न स्यात् । तथा च अष्टानाम् इति रूपं न सिद्ध्यति । अतः हलीत्यपकर्षः आवश्यकः ।

अष्टन् शब्दस्य नान्तसंख्यावाचकत्वेन षट्संज्ञा ष्णान्ता षट् इति सूत्रेण विधीयते । तच्च संज्ञाविधायकं सूत्रम् । संज्ञापरिभाषाणां विध्युपकारविषये पक्षद्वयं विद्यते – यथोद्देशपक्षः, कार्यकालपक्षश्च । तत्र यथोद्देशपक्षे भविष्यति किञ्चिदनेन प्रयोजनम् इति निर्णीय आदावेव अष्टन् शब्दस्य नान्तसंख्यावाचकत्वं निमित्तीकृत्य ( विभक्तिनिरपेक्षत्वेन अन्तरङ्गत्वात्) षट्संज्ञां कुर्मः, अनन्तरम् आमि आत्वे, पूर्वां कृतां संज्ञां कृतात्वेऽपि "एकदेशविकृतमनन्यवत्" इति परिभाषया आनीयते । तेन षट्चतुर्भ्यश्च इति नुडागमो भवति, अष्टानाम् इति रूपं सिद्ध्यति हलीत्यस्यापकर्षाभावेऽपि । अतः हलीत्यपकर्षस्य यथोद्देशपक्षे प्रयोजनं नास्त्येव –

कार्यकालपक्षे षट्संज्ञायाः विधिसूत्रैकवाक्यतया नुडेकवाक्यतापन्नत्वेन, परनिमित्तकत्वेन बहिरङ्गत्वम् आत्वस्य विभक्तिनिमित्तकत्वेन समानम् । हलीत्यस्यापकर्षाभावे नुटि कृते, अकृतेऽपि आत्वस्य प्राप्त्या आत्वं नित्यं भवति । नित्यत्वात् आत्वे नान्तसंख्यावाचकत्वाभावान्नुडागमो न स्यात् । तथा च अष्टानाम् इति रूपं न सिद्ध्यति । तत्सिद्ध्यर्थं हलीत्यपकर्षः भाष्यकारेण स्वीकृतः ।

शब्दरत्नकारः एवमवोचत – "षट्संज्ञायाः" अल्विधित्वेन तन्मूलककार्याणामप्यल्विधित्व-मित्यभिमानः।यदि नान्तसंख्यावाचकत्वसमानाधिकरणधर्मविशेषरूपस्य षट्त्वस्य स्थान्यलधर्मत्वाभावेन

तत्प्रयुक्तकार्यस्य नुडादेरपि नाल्विधित्वमिति स्थानिवत्त्वेन एकदेशविकृतन्यायेन च नुट् सुलभः तर्हि मुख्ये कार्यकालपक्षे तत्सिद्धिः हलीत्यनुवृत्तेः फलमिति बोध्यम् ।

एवं रीत्या "अष्टन आ विभक्तौ" इति सूत्रे हलीत्यपकर्षस्य "अष्टानाम्" इति रूपसिद्धिः प्रयोजनमिति प्रतिपादितम् । तथा च आत्वम् अष्टाभिः अष्टाभ्यः, अष्टानाम् , अष्टासु इत्यत्र हलादिविभक्तिषु भवति । जसि, शसि अजादित्वात् न भवति इति निश्चीयते ।

एवं स्थिते "अष्टाभ्य औश्" इति सूत्रेण अष्टाभ्य परयोः जश्शसोः औश् विधीयते । सूत्रार्थः एवं वर्ण्यते– कृताकारादष्टनः परयोः जश्शसोः औश् भवतीति । तत्कथं सङ्गच्छते । हलादिविभक्ति-परकत्वाभावात् । इति चेद् –

उच्यते – अष्टाभ्यः इति कृतात्वस्य अनुकरणम् – इति शेखरकारः उवाच । लक्षणवशसम्पन्नत्वे हि तस्य वैकल्पिकतया मात्रालाघवादष्टभ्य इति वदेदिति तस्याशयः । वैकल्पिकेषु भावानुष्ठानं धर्माधिक्यफलायेति तु लौकिकप्रयोगविषयो नतु सौत्रप्रयोगविषय इति तदाशयः इति गुरुप्रसादोषे व्याख्यातारः लिलिखुः ।

"अष्टन आ विभक्तौ" इति सूत्रे हलीत्यपकृष्य वाक्यद्वयं क्रियते – अष्टनः इत्येकम् , आ विभक्तौ इत्यपरम् । द्वितीयवाक्ये हलीत्यस्य सम्बन्धः, तेन प्रथमवाक्यं क्वचिदक्ष्वपि प्रवर्तत इति शेखरकाराशयः ।

शेखरकारः "अष्टाभ्य औश्" इति सूत्रे शब्देन्दुशेखरे एवं प्रास्तावीत् – अष्टाभ्य उङ् इति कुतः नोक्तम् इति । तेषामयमाशयः भवितुमर्हति यत् – तदा सूत्रार्थः एवं भवति "कृताकारादष्टनः परयोः जश्शसोः उङ् भवति" इति। उङः ङित्वात् ङिच्च इत्यनेन अन्तादेशो भवति। जसः सकारस्य उङ् भवेत् । अष्टा अ उ इति स्थिते प्रत्ययावयवयोः द्वयोः आकार–उकारयोः गुणे, वृद्धौ अष्टौ इति रूपं भवति खलु इति चेद् –

अष्टौ इति रूपं न सिद्ध्यति – अष्टा अ उ इति स्थिते गुणो न भवति । "इण्ङ्शीनामाद्गुणः सवर्णदीर्घ-त्वात् " शचङन्तस्यान्तरङ्गलक्षणत्वात्" इति वचनाभ्याम् अन्तरङ्गत्वात् सवर्णदीर्घः एव भवति । एवञ्च आदौ सवर्णदीर्घः प्रवर्तते । तदनन्तरं गुणे अष्टौ इति रूपं न सिद्ध्यति । अतः अष्टाभ्य औश इति सूत्रं भगवान् पाणिनिः अकार्षीत् ।

वाराणसेयाः एवं व्याचख्युः – प्रथमाबहुवचने अष्टौ इति रूपं सिद्ध्यति । अष्टा अ उ इति स्थिते सवर्णदीर्घः – गुणः इति द्वे कार्ये प्राप्नुतः । प्रकृतिप्रत्ययसम्बन्धिवर्णापेक्षदीर्घापेक्षया प्रत्ययमात्रसम्बन्धि-वर्णापेक्षत्वेन गुणस्यापि अन्तरङ्गत्वात् उभयोः अन्तरङ्गयोः, कृताऽकृतप्रसङ्गित्वेन नित्यत्वात् पूर्वं गुणे अष्टौ इति रूपं प्रथमाबहुवचने भवति । द्वितीयाबहुवचने शसि गुणे कृते अष्टा ओ इति स्थिते असर्वनामस्थानाजादिविभक्तिपरकत्वेन भसंज्ञायाम् आतो धातोः इति आकारलोपापत्तिः । अत्राकारान्तधातुर्नास्ति खलु इति चेत् – तत्र आतः, धातोः इति योगविभागं कृत्वा धातुग्रहणम् आबन्तनिवृत्यर्थमिति सिद्धान्तिततत्वात् । अतो द्वितीयाबहुवचने एव दोषः इति ।

नागेशाशयं समर्थयन् गुरुप्रसादशेषे वेङ्कटेश्वरशास्त्रिणः एवं खण्डयामासुः । प्रकृतिप्रत्ययसम्बन्धि-कार्यं बहिरङ्गम् , प्रत्ययसम्बन्धिकार्यमन्तरङ्गम् इत्येतादृश अन्तरङ्गविचारः क्वापि अदर्शनेन मूलोक्तरीति-रेव साध्वी । इति ।

वैकल्पिकं चेदमष्टन आत्वम् अष्टनो दीर्घात् इति सूत्रे दीर्घग्रहणात् ज्ञापकात् इति सिद्धान्तकौमुद्यां भट्टोजीदीक्षितः अगादीत् । तथा हि – "अष्टनो दीर्घात्" (६–१–१७२) इति सूत्रस्यैवमर्थो विद्यते – दीर्घान्तादष्टनः परा असर्वनामविभक्तिः उदात्ता भवति । (अष्टाभिः दाशभिः इत्युदाहरणे । ) यदि आत्वं नित्यं तदा सर्वदा अष्टन् शब्दः दीर्घान्त एव भवति । अतः ह्रस्वेऽन्तोदात्तव्यावृत्त्यर्थं क्रियमाणं दीर्घग्रहणं व्यर्थं सत् एवं ज्ञापयति – इदम् = श्रुतम् – हलादौ, अनुमितम् – जश्शसोः विषये अष्टनः आत्वं वैकल्पिकमिति । तेन ह्रस्वे अष्टभिः इत्यत्र "झल्युपोत्तमम्" (६–१–१८०) इति (षट्त्रिचतुर्भ्यो या झलादिविभक्तिः तदन्ते पदे उपोत्तमम् उदात्तं भवति इत्यर्थः । अध्वर्युभिः पञ्चभिः इत्युदाहरणम्) उपोत्तमोदात्तत्वं भवति ।

अत्र शब्दरत्नकारः एवमभिप्रैति – ज्ञापनोत्तरं दीर्घग्रहणस्य स्वांशे चारितार्थ्यं न सम्भवति इति । तथा हि – अष्टन् + भिस् इत्यवस्थायामात्वे अष्टाभिः इत्यत्र अष्टनो दीर्घात् इति अष्टन्स्वरः चरितार्थः । कार्यकालपक्षे सम्प्रति षट्संज्ञा न प्रवर्तते, नान्तत्वाभावात् । अष्टन् स्वरार्थं षट्संज्ञायाः अपेक्षा नास्ति । अतः निस्संशयम् अष्टन्स्वरः प्रावर्तत । स च स्वरः अष्टभिः इत्यत्रापि प्राप्नोति । (झल्युपोत्तमम् इति स्वरः पञ्चभिः इत्यत्र चरितार्थः) तत्रैव "झल्युपोत्तमम्" (६–१–१८०) इति सूत्रेण उपोत्तमोदात्तत्वञ्च प्राप्नोति । तदाष्टन् स्वरापेक्षया परत्वात् झल्युपोत्तमम् इति स्वर एव प्रवर्तते । तदनन्तरं पुनः अष्टन् स्वरः न प्रवर्तत एव – सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव इति न्यायात् । (अन्यत्र चरितार्थयोः द्वयोः शास्त्रयोः एकस्मिन् लक्ष्ये युगपत्प्रवृत्तौ सकृदेकवारं यद्बाधितं तद्बाधितमेव इति परिभाषार्थः । ) एवञ्च तत्र अष्टन् स्वरस्य प्राप्तेरेवाभावेन तद्वारणार्थं कृतेन दीर्घग्रहणेन किम् ?

सिद्धान्ती एवं कथयति – अष्टभिः इत्यत्र अष्टन्स्वरापेक्षया परत्वात् झल्युपोत्तमम् इति स्वर एव प्रवर्तते सकृद्गतिन्यायात् इति । यावता विनाऽनुपपत्तिः तस्य सर्वस्य ज्ञाप्यत्वम् इति न्यायेन दीर्घग्रहणस्य आत्ववैकल्पिकत्वप्रतिपादकपरभाष्यप्रामाण्येन सकृद्गतिन्यायस्यानित्यत्वज्ञापनद्वारा पुनः प्रसङ्गन्यायस्य प्रवृत्तिः ज्ञाप्यते । तेन पुनः अष्टन् स्वरः ह्रस्वे प्राप्तौ तद्व्यावृत्त्यर्थं दीर्घग्रहणं स्वांशे चरितार्थम् । एवञ्च कार्यकालपक्षे दीर्घग्रहणम् आत्वस्य वैकल्पिकत्वं, सकृद्गतिन्यायस्य वैकल्पिकत्वञ्च ज्ञापयति ।

यदि त्विह यथोद्देशपक्ष एव स्वीक्रियेत, तदा हलीत्यस्याऽऽत्वविधायकसूत्रेऽपकर्षो न कार्यः । अतो लाघवात् यथोद्देशपक्ष एवात्र स्वीक्रियते । तदा अष्टन् इत्यवस्थायां नान्तसंख्यावाचकत्वात् षट् संज्ञा प्रावर्तत । ततः भिसि, आत्वं प्रवर्तते । एवञ्च अष्टाभिः इत्यत्रापि "षट्त्रिचतुर्भ्यो हलादिः" (६–१–१७९) (एभ्यो हलादिः विभक्तिः उदात्ता भवति) इति सूत्रस्य प्राप्त्या अष्टनो दीर्घात् इति सूत्रस्य अचारितार्थ्येनाऽपवादत्वेन

अष्टाभिः इत्यत्रेव अष्टभिः इत्यत्रापि स्यादिति दीर्घग्रहणमिति । नान्ते कृतषट्संज्ञायाः स्थानिवद्भावेन आत्वानन्तरमपि आनीयते । नात्र अनल्विधाविति निषेधः – नान्तसंख्यावाचकत्वसमानाधिकरणधर्मरूपस्य षट्संज्ञानिमित्तकस्वरस्याल्धर्मत्वाभावेन । स्वरादीनाम् इत्यत्र आदिपदेन षट्चतुर्भ्यश्च इति नुडागमश्च गृह्यते । अतः सोऽपि नाल्विधिः । एवञ्च अत्रापि षट्त्रिचतुर्भ्यो हलादिः इत्यस्य प्राप्त्या अष्टन् स्वरस्य तदपवादत्वात् ।

दीर्घग्रहणं षट्संज्ञाज्ञापकमाकारन्तस्येति भाष्यस्यायमेवाशयः इति न विरोधः । एवञ्च अष्टाभिः इत्यत्रेव अष्टभिः इत्यत्रापि तत्प्रवृत्तिः स्यादिति तद्व्यावृत्त्यर्थं क्रियमाणं दीर्घग्रहणं विकल्पज्ञापकमिति भावः।

एवं यथोद्देशपक्षे अष्टन् शब्दस्य षट्संज्ञा अन्तरङ्गत्वात् प्रावर्तत इति निश्चिते पक्षे सम्प्रति दोषः । अष्टन् शब्दस्य द्वितीयाबहुवचने शसि, तस्य अष्टाभ्य औश् इत्यनेन औ आदेशे, आत्वानन्तरम् आकारान्तस्यापि षट्संज्ञायां तस्य ''षड्भ्यो लुक्'' इत्यनेन लुकि अष्टौ इति रूपं न सिद्ध्यति । इति चेत् – सत्यम् । आकारान्तस्य षट्त्वेऽपि अष्टाभ्य औश् इत्यनेन औश्विधानसामर्थ्यात् लुक् न भवति ।

पूर्वपक्षी एवं पृच्छति – षट्त्रिचतुर्भ्यो हलादिः, झल्युपोत्तमम् इति द्वयोः सूत्रयोः अप्रवृत्तिस्थले अष्टौ इति द्वितीयाबहुवचने अष्टनो दीर्घात् इति सूत्रं प्रवर्तते । एवञ्च अष्टौ इत्यत्र अष्टन् स्वरः चरितार्थः । तत्र चरितार्थः अष्टन् स्वरः अष्टभिः इत्यत्र प्राप्नोति, परेण झल्युपोत्तमम् इत्यनेन बाध्यते । अतः ह्रस्वे प्राप्तेरेवाभावेन तत्र स्वरव्यावृत्त्यर्थं क्रियमाणं दीर्घग्रहणं किमर्थम् ?

अष्टौ इत्यत्र अष्टा अ औ इत्यवस्थायाम् वृद्धिः प्राप्नोति, अष्टन् स्वरश्च प्राप्नोति । अन्तरङ्गत्वात् एकादेशः प्रवर्तते । इदानीं षट् संज्ञकात्परत्वेन शसः अभावात् स्वरः न प्रवर्तते । अतः स्वरस्य चारितार्थ्यं नास्ति खलु –

उच्यते – स्वरात् पूर्वं सन्धिकार्यं न प्रवर्तते इति ''यद्धितुपरं छन्दसि'' (८–१–५६) इति सूत्रे भाष्ये ध्वनितम् – तत्रहि – लोट् च (८–१–५२) इति सूत्रे ''गत्यर्थलोटा लृण्न चेत्कारकं सर्वान्यत्'' (८–१–५१) इत्यनुवर्तमाने लोडन्तं गत्यर्थलोटा युक्तं नानुदात्तम् , आगच्छ देव ग्रामं पश्य इत्युदाहरणम् । पश्य इति लोडन्तं गत्यर्थलोटा आगच्छ इत्यनेन युक्तत्वात् नानुदात्तं प्राप्नोति । अनन्तरं यद्धितुपरं छन्दसि इति सूत्रेण तिङन्तं नानुदात्तम् इति स्वरनिषेधः विहितः । ''निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तम्'' (८–१–३०) एतैः युक्तं न निहन्यते । ''हि च'' (८–१–३४) हियुक्तं तिङन्तं नानुदात्तम् । तुपश्यपश्यताहैः पूजायाम् (८–१–३९) एभिः युक्तं तिङन्तं न निहन्यते पूजायाम् । एतैः सूत्रैः सिद्धे यद्धितुपरं छन्दसि इति सूत्रं नियमार्थम् । एतैरेव परभूतैः योगे नान्यैः इति । तेन ''जाये स्वो रोहावेहि'' इत्यत्र (जाये स्वः रोहाव आ अ इहि) आङः परत्वम् इहीत्यस्य अस्तीति कृत्वा ''तिङतिङः'' इति निघातो भवति । ''लोट् च'' (८–१–५२) इति सूत्रे ''गत्यर्थलोटा लृण्न चेत्कारकं सर्वान्यत्'' इति निषेधमाशङ्क्य छान्दसत्वेन समाहितम् । रोहाव आ इहि इत्यत्र आङ् इत्युपसर्गः रुहधातोः छन्दसि परेऽपि इत्यनेन परे भवति इति कथयामः चेत् – तदा

समानवाक्यत्वाभावात् समानवाक्ये निघातयुष्मदस्मदादेशाः इति नियमात् न स्यात् । रुह धातोः गत्यर्थकत्वाभावात् । उपसर्गस्तु नानेन सम्बध्यते । अत एव न रुहिः गत्यर्थः । (अवष्टम्भार्थकः) अत्र प्रमाणम् – "गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च" इति सूत्रे गत्यर्थेभ्यः पृथक् रुहिग्रहणं चरितार्थम्। येषामुपसर्गयोगाद्विना गतिप्रतीतिः ते गत्यर्थाः रुहिस्तु उसर्गयोगे गतिवाची । यदि रुहिः न गत्यर्थः – आरोहन्ति हस्तिनं मनुष्याः, आरोहयति हस्ती स्थलं (हस्त्युपरिध्रियमाणं काष्ठादिमयमुपवेशनम्) मनुष्यान् । गतिबुद्धि – इत्यादिना कर्मसंज्ञा न प्राप्नोति । तस्मान्नैतच्छक्यं वक्तुं "न रुहिः गत्यर्थः" इति। कस्मात्तर्हि रोहावेत्यनेन युक्ते एहित्यस्य न भवति ? छान्दसत्वात् । तत्र कैयटेन एवं व्याख्यातम् – नित्यत्वात् एकादेशे निघाताप्राप्तिमाङ्क्ष्य एवंविधभाष्यविचारात्पूर्वं सन्धिकार्याप्रवृत्तिरनुमीयते इति । अत्र च नेन्द्रस्य परस्य इति समान्यापेक्षं ज्ञापकमिति नागेशः । एवञ्च अष्टौ इत्यत्र सन्धिकार्यात् पूर्वं स्वर एव प्रवर्तते, अतः अष्टौ इत्यत्र अष्टन् स्वरः चरितार्थः । तत्र चरितार्थः अष्टन् स्वरः अष्टभिः इत्यत्र प्राप्नोति, परेण झल्युपोत्तमम् इत्यनेन बाध्यते । अतः ह्रस्वे प्राप्तेरेवाभावेन तत्र स्वरव्यावृत्त्यर्थं क्रियमाणं दीर्घग्रहणं किमर्थम् ?

दीर्घग्रहणस्य आत्ववैकल्पिकत्वज्ञापकतापरभाष्यप्रामाण्यात् अष्टन् शब्दस्य "घृतादीनाञ्च" इत्यन्तोदात्तत्वेन तेन साकम् एकादेशे "एकादेश उदात्तेन उदात्तः" इत्यनेन उदात्तो भवति । अतः एवमन्तोदात्तत्वं सिध्यति। घृतादिषु पाठाभावे "त्रः संख्यायाः" इत्यनेनाद्युदात्तत्वं स्यात् । किञ्च एकादेशे कृतेऽपि एकदेशविकृतमनन्यवत् इति न्यायेन टान्तेऽष्टन् शब्दत्वं परादिवद्भावेन औ इत्यस्य विभक्तित्वं सिध्यति । एवम् अष्टनो दीर्घात् इति सूत्रं विनापि अन्तोदात्तस्वरः सिध्यति । अतः अष्टन् स्वरः न चरितार्थः ।

तर्हि प्रियाष्टाभ्याम् इति समासे अष्टन् स्वरः चरितार्थः । षट् संज्ञकात्परत्वमाश्रित्यप्राप्त स्वरविधायक-सूत्रद्वये विहितविशेषणत्वाश्रयणेन गौणे समासे षड्वराप्राप्तेः । षट् स्वराप्राप्तिस्थले अष्टन् स्वरः चरितार्थः। अष्टभ्याम् इत्यत्र उभौ स्वरौ प्राप्नुतः । परत्वात् षट् स्वर एव प्रवर्तते । अतः तत्र स्वरव्यावृत्त्यर्थं क्रियमाणं दीर्घग्रहणं व्यर्थमेव ।

एतादृशर्थस्वीकारादेव "चतुरशसि"(६-१-१६७) (चतुरोऽन्त उदात्तः शसि परे इत्यर्थः।) इति सूत्रभाष्यं सङ्गच्छते । तत्र रस्यहि – चतुरः शसि इत्यनेन विहितः स्वशसि "स्त्रियां प्रतिषेधः चतस्रः पश्य" इति वार्त्तिककारः उवाच ।

अन्यथा – चतुर् शब्दः एवं निष्पन्नो भवति – चतेरुरन् इति उणादिसूत्रेण चते – याचने इति धातोः उणादि उरन् प्रत्ययः । प्रत्ययस्य नित्वेन "त्रः संख्यायाः" इति आद्युदात्तत्वं भवति । तस्य स्त्रियां "त्रिचतुरोः स्त्रियां तिसृचतसृ" इत्यनेन चतस्रादेशे स्थानिवद्भावेन अन्तोदात्तत्वे सिद्धे, तिसृ + अस् इति स्थिते "अचि र ऋतः" इत्यनेन रेफादेशे उदात्तयणो हल्पूर्वात् (६–१–१७४) इत्यनेन (उदात्तस्थाने यो यण् हल्पूर्वः तस्मात् परा नदी शसादिविभक्तिश्च उदात्ता स्यात् ) उदात्तत्वं तकाराकारस्य सिध्यति । अतः पुनर्विधानं किमर्थमित्याशयेन "चतुरः शसि स्त्रियामप्रतिषेधः आद्युदात्तनिपातनात्" (चतसर्याद्युदात्त-निपातनात्सिद्धम्) इति वार्तिककारः अवोचत् । स्थानिवद्भावादाद्युदात्तत्वे सिद्धे पुनराद्युदात्तनिपातनमस्य

स्वरस्य बाधकमित्यर्थः । विभक्तिस्वरः चतुरः शसि इति सूत्रविहितः । निपातस्वरः – चतुरः शसि स्त्रियामप्रतिषेधः आद्युदात्तनिपातनात् इति वार्तिकविहितः ।

षट्त्रिचतुर्भ्यो हलादिः, झल्युपोत्तमम् इत्यत्र विहितविशेषणत्वस्वीकारे न ह्यन्यद्धलादिग्रहणे प्रयोजनम् इति भाष्यमेव प्रमाणम् । अयम्भावः – षट्त्रिचतुराः नित्यबहुवचनान्ताः । अतः द्विवचनैकवचने न भवतः। तत्र षड्भ्यः परयोः जश्शसोः लुगेव । अन्या सर्वा हलादयः । "अञ्चेश्छन्दस्यसर्वनामस्थानम्"(६-१-१७०) (अञ्चेः परा विभक्तिरुदात्ता भवति) इति सूत्रात् असर्वनामस्थाने इत्यनुवृत्त्या त्रिचतुरोः जसि नेदम् । त्रीन् इति शसि एकादेश उदात्तेनोदात्तः इत्येव सिद्धम्। तिस्रः पश्य इत्यत्र तु उदात्तयणो हल्पूर्वात् (६-१-१७४) इत्यनेन (उदात्तस्थाने यो यण् हल्पूर्वः तस्मात् परा नदी शसादिविभक्तिश्च उदात्ता स्यात्) सिद्धम् । अन्या सर्वा हलादयः । चतुरः पश्य इत्यत्रापि नानेन स्वरः - चतुरः शसि इत्यारम्भात् । तस्मात् चतस्रः पश्येत्येव तद्व्यावर्त्यम् । यदि निपातनस्वरो विभक्तिस्वरबाधकः स्यात् तदा तद्वैयर्थ्यं स्पष्टमेव । तस्मात् निपातनस्वरः विभक्तिस्वरस्य बाधको न भवति इति ज्ञाप्यते । तेन चतसृणामित्यादौ विभक्तिस्वरः सिध्यति । अतः चतसृणामित्यत्र विभक्तिस्वरः सिद्धः । षट् त्रिचतुर्भ्यो हलादिः इति सूत्रे हलादिग्रहणेन निपातनस्वरस्य विभक्तिस्वराबाधकत्वज्ञापनात् । आद्युदात्तनिपातने हि हलादि-ग्रहणानर्थक्यम् , "न ह्यन्यद्धलादिग्रहणं प्रयोजयति, अन्यदतश्चतसृशब्दात्" इति भाष्योक्तं सङ्गच्छते ।

"चतुरः शसि" (६-१-१६७) इति सूत्रभाष्यम् – शसि स्त्रियां प्रतिषेधः । शसि स्त्रियां प्रतिषेधो वक्तव्यः । चतस्रः पश्य । चतुरः शसि स्त्रियामप्रतिषेध आद्युदात्तनिपातनात् । चतुरः शसि स्त्रियामप्रतिषेधः । अनर्थकः प्रतिषेधोऽप्रतिषेधः । शसि स्वरः कस्मान्न भवति ? आद्युदात्तनिपातनात् । आद्युदात्तनिपातनं करिष्यते, स च निपातनस्वरः शसि स्वरस्य बाधको भविष्यति । एवमप्युपदेशिवद्भावो वक्तव्यः । यथैव हि निपातनस्वरः शसिस्वरं बाधते एवं विभक्तिस्वरमपि बाधेत । चतसृणामिति । विभक्तिस्वरभावश्च हलादिग्रहणात् विभक्तिस्वरस्य च भावः सिद्धः । कुतः ? हलादिग्रहणात् । यदयं षट्त्रिचतुर्भ्यो हलादिः इति हलादिग्रहणं करोति तज्ज्ञापयत्याचार्यो "न निपातनस्वरो विभक्तिस्वरं बाधते" इति । कथं कृत्वा ज्ञापकम् ? आद्युदात्तनिपातने हि हलादिग्रहाणानर्थक्यम् । आद्युदात्तनिपातने हि सति हलादिग्रहणमनर्थकं स्यात् । नह्यन्यद्धलादिग्रहणं प्रयोजयत्यन्यदतचतसृशब्दात् । षट् संज्ञास्तावन्न प्रयोजयन्ति । किं कारणम् ? बहुवचनविषयत्वात् । तेन द्विवचनैकवचने न स्तः । जश्शसी चात्र लुप्येते। अन्याः सर्वाः हलादयो विभक्तयः । त्रिशब्दश्चापि न प्रयोजयति । किं कारणम् ? बहुवचनविषयत्वात् । तेन द्विवचनैकवचने न स्तः । असर्वनामस्थानमिति वचनात् जसि न भविष्यति । शसि भवितव्यमेकादेश उदात्तेनोदात्त इति । अन्याः सर्वाः हलादयो विभक्तयः । तिसृशब्दश्चापि न प्रयोजयति । किं कारणम् ? बहुवचनविषयत्वात् । तेन द्विवचनैकवचने न स्तः । असर्वनामस्थानमिति वचनात् जसि न भवितव्यम् । शसि भवितव्यम् उदात्तयणो हल्पूर्वादिति । अन्याः सर्वाः हलादयो विभक्तयः । चतुः शब्दश्चापि न प्रयोजयति । किं कारणम् ? बहुवचनविषयत्वात् । तेन द्विवचनैकवचने न स्तः । असर्वनामस्थानमिति वचनाज् जसि न भवितव्यम् । शसि भवितव्यम् "चतुरः शसीति ।

अन्याः सर्वाः हलादयो विभक्तयः । तत्र चतसृशब्दादेकस्माच्छस् असर्वनामस्थानमजादिर्विभक्तिरस्ति । यदि चाऽत्र निपातनस्वरः स्याद्धलादिग्रहणमनर्थकं स्यात् । नैव वा पुनरत्र शसिस्वरः प्राप्नोति । किं कारणम् ? यणादेशे कृते शसः पूर्वम् उदात्तभावी नास्तीति कृत्वा । अवशिष्टिस्य तर्हि प्राप्नोति । ऋकारेण व्यवहितत्वान्न भविष्यति । यणादेशे कृते नास्ति व्यवधानम् । स्थानिवद्भावाद्व्यवधानमेव । प्रतिषिध्यतेऽत्र स्थानिवद्भावः" स्वरविधिं प्रति न स्थानिवद्भवतीति । नैषोऽस्ति प्रतिषेधः । उक्तमेतत् – प्रतिषेधो स्वरदीर्घयलोपेषु लोपाजादेशे न स्थानिवदिति ।

यदि षट् स्वरविधायके सूत्रे न विहितविशेषणं तदा अन्यदतश्चतसृशब्दात् इति कथनमसङ्गतं स्यात् । प्रियाष्टानः इति बहुव्रीहौ सम्भवात् ।

प्रियाः अष्टौ यस्य सः इति बहुव्रीहिसमासे प्रियाष्टाः – प्रियाष्टा इति वा भवति । तस्य षष्ठी बहुवचने प्रयोजनसत्त्वात् नान्यदतः चतसृशब्दात् इति कथनमसङ्गतं स्यात् । अष्टौ परमाष्टौ इत्याद्यपि न व्यावर्त्यम्। तत्र एकादेश उदात्तेनोदात्तः इति स्वरेणैव सिद्ध्यति ।

वस्तुतस्तु "ष्णान्ता षट्" इति सूत्रे भाष्ये "अष्टन आ विभक्तौ" इत्यत्र हलीत्यपकर्षमुक्त्वा प्रियाष्टौ–प्रियाष्टाः इति न सिद्ध्यति, प्रियाष्टानौ–प्रियाष्टानः इत्येव प्राप्नोति इति शङ्किते यथा लक्षणमप्रयुक्ते इति समाहितम्। नैव वा लक्षणमप्रयुक्ते प्रवर्तते, प्रयुक्तानामेवान्वाख्यानात् इति कैयटः ।

कदष्टौ इति व्यावर्त्यं स्यात् । तथा हि - कुत्सिताः अष्टौ इति विग्रहे कुशब्दस्य अष्टन् शब्देन कुगतिप्रादयः इति समासे "कोः कत्तत्पुरुषेऽचि" इति कोः कदादेशे सिद्धम् । तत्र समासान्तोदात्तत्वे ततो वृद्ध्या एकादेशे औकारे तस्य एकादेश उदात्तेनोदात्तः इत्यन्तोदात्तत्वस्वरः सिद्ध्यति । तत्र स्वरसाधनार्थ-मपि अष्टन् स्वरः आवश्यकः ।

अत्रोच्यते – कुशब्दस्य निपातत्वेन "निपाता आद्युदात्ता" इति आद्युदात्ततया तत्पुरुषे तुल्यार्थतृतीया-सप्तम्युपमानाव्ययद्वितीयाकृत्याः इति पूर्वपदप्रकृतिस्वरेण अष्टावित्यस्याद्युदात्तत्वात् । अत्र अव्यये नञ् कुनिपातानाम् इति परिगणनेन पूर्वपदप्रकृतिस्वरव्यावृत्तिस्तु न कर्तुं शक्यते स्थानिवत्त्वेन कत् इत्यस्य कुशब्दत्वाक्षतेः । आद्युदात्तत्वे प्राप्ते अन्तोदात्तत्वार्थम् अष्टन् स्वरः चरितार्थः ।

चतुरः शसि इति सूत्रभाष्य (न ह्यन्यद्धलादिग्रहणम्) प्रामाण्यात् कदष्टौ इत्यादीनामनभिधानमेव ।

वस्तुतः दीर्घग्रहाणस्य आत्ववैकल्पिकत्वप्रतिपादकपरभाष्यप्रामाण्यात् प्रियाष्टादीनामनभिधानामेव । तिसृभ्यो जसः इति सूत्रे भाष्येऽपि जस् ग्रहणं किमर्थम् ? इति आशङ्क्य तिसृकेति कन्प्रत्ययान्तं प्रत्युदाहरणमुक्त्वा जस्ग्रहणानर्थक्यमन्यत्राभावात् इत्युक्तम् । अस्यापि नित्यबहुवचनान्ततया तदन्ययोरभाव एव, शसि तु उदात्तयणः इत्येव सिद्धम् । अन्याः सर्वाः हलादयः तत्र षट्त्रिचतुर्भ्यो हलादिः इत्येव भविष्यति । तिसृकेत्यपि न प्रयोजनम् । मध्येऽपवादन्यायेन तिसृभ्यः इत्यस्य अनुदात्तौ सुप्पितौ इति स्वरं बाधिष्यते नित्स्वरं न बाधिष्यते । "उपसमस्तार्थमेके" इति कथनात् तदन्तेऽपि तिसृभ्यो जसः इति स्वरः प्रवर्तत इति लभ्यते । अतः षड्वरः अष्टन् स्वरश्च तदन्तेऽपि प्रवर्तन्ते ।

"चतुरः शसि" इति सूत्रस्थं स्त्रियां प्रतिषेधो वाच्यः इति वार्तिकमपि न कार्यम् । चतस्रः पश्य इत्यत्र स्वररेफादेशयोः प्राप्तौ परत्वात् रेफादेशे तस्य स्थानिवत्त्वेन व्यवधानात् तकाराकारस्य स्वराप्राप्तेः । न च रेफस्यैव स्वरो भवत्विति वाच्यम् ? हल्स्वरप्राप्तौ व्यञ्जनस्याऽविद्यमानवद्भावात् । न च स्थानिवद्भावस्य स्वरे कर्तव्ये निषेधो भविष्यतीति वाच्यम् । स्वरदीर्घयलोपेषु लोपाजादेशस्यैव स्थानिवद्भावनिषेधात् । एवमाद्युदात्तयोः त्रिचतुरोः आन्तरतम्यादाद्युदात्तत्वे सिद्धे आद्युदात्तनिपातनमपि न कार्यम् । हलीत्यस्यापकर्षस्तु प्रतिपत्तिलाघवाय इति ।

तर्हि चतुरः शसीति सूत्रभाष्यविरोधः । तत्र हि विभक्तिस्वरभावश्च हलादिग्रहणात् इति । तच्च वार्तिकं तिसृभ्यो जसः इति सूत्रस्थ जस्ग्रहणानर्थक्यमन्यत्राभावात् इति वार्तिकवद्दूष्यम् ।

"तिसृभ्यो जसः" इति सूत्रस्थ उपसमस्तार्थमेके इति भाष्ये एके इति मुख्यार्थकम् । अतो विहितविशेषणं नास्त्येव क्वापि । तस्मात् गौणे षट्त्रिचतुर्भ्यो हलादेः, चतुरः शसि इत्यादयश्च प्रवर्तन्त एव। एवञ्च सत्यभिधाने प्रियत्रीन् इत्यादिव्यावृत्त्यर्थं हलादिग्रहणं सार्थकम् ।

प्रियाष्टादीनामनभिधानादेव "अष्टाभ्य औश्" इति सूत्रे भाष्ये विभाषा आत्वं यदयमात्वभूतस्य ग्रहणं करोति अष्टाभ्य इति, अन्यथाऽष्टन इत्येव ब्रूयात् इत्युक्तम् । कैयटरीत्या गौणे प्रवृत्त्यभावाय बहुवचन-निर्देशस्यावश्यकतया तदसङ्गतिः स्पष्टैव । एवञ्च हरदत्तादिरन्नकारान्तानामेतत्प्रयोगविचारः सर्वोऽपि निष्फल एवेति बोध्यम् ।

अत एव "ष्णान्ता षट्" इति सूत्रे भाष्ये अष्टानाम् इत्येतत्सिद्धये हलीत्यपकर्षमुक्त्वा तत्र पक्षे प्रियाष्टौ – प्रियाष्टाः इति सिद्ध्यति, प्रियाष्टानौ – प्रियाष्टानः इति प्राप्नोति इति शङ्किते "यथालक्षणमप्रयुक्ते" इति समाहितम् । तत्र कैयटः – १. लक्षणमनतिक्रम्य यथालक्षणमिति अव्ययीभावसमासः । अप्रयुक्ते विषये लक्षणानतिक्रमेण प्रवृत्तिरित्यर्थः । २. लक्षणस्याभावः अलक्षणम् , अलक्षणं योग्यम् यथालक्षणम् इति अव्ययीभावगर्भोऽव्ययीभावः । लक्षणपदस्य लक्षणप्रवृत्तिरित्यर्थः । अप्रयुक्ते लक्षणप्रवृत्त्यभावस्यैव योग्यता, न तु लक्षणप्रवृत्तेः । एवञ्च तादृशः प्रयोगः असाधुः । अत्र द्वितीयव्याख्यैवोचिता । प्रयुक्तेऽपि लक्षणानतिक्रमात् । प्रयुक्तानामिदमन्वाख्यानमिति भाष्योक्तेः, भाष्यकारस्य लक्ष्यैकचक्षुष्कत्वाच्च । अन्यथा प्रियाष्टानः इत्यादेराद्यव्याख्यायां साधुत्वं, द्वितीयव्याख्यायां शास्त्राविषयत्वेनासाधुत्वं च प्रसज्येत। अत एव कैयटः – हल्ङ्यादिसूत्रे "अप्रयुक्ते लक्षणाभावः" इति व्याख्यातम् । नाम्रेडित-स्यान्त्यस्य तु वा इति सूत्रे भाष्ये "प्रयोगमूलत्वादस्य शास्त्रस्य प्रयोगाभावे न प्रवृत्तिः" इत्युक्तम्।

किञ्च प्रियाष्टादीनामभिधाने गौणे बहुवचनैकवचननिर्देशयोः फलभेदस्य सत्त्वेन तद्विषयशङ्का-समाधानयोरकरणं भाष्यकृतः न्यूनतामावहेदिति तदनभिधानमेव सर्वथा भाष्यतात्पर्यमिति भावः ।

# "अन्यारात्" (२–३–२९) इत्यादिसूत्रविचारः

**विद्वान् जानमद्दि रामकृष्णः, तिरुपति**

शब्दशास्त्रे धातु–प्रातिपदिकभेदेन प्रकृतिर्द्विविधा । तत्र प्रातिपदिकात् "स्वौजसमौट्"(४–१–२) इत्यादिसूत्रेण एकविंशतिः प्रत्यया विधीयन्ते । एतेषां प्रत्ययानां सुबिति व्यवहारः । "विभक्तिश्च" (१–४–१०४) इति सूत्रेण सुपः विभक्तिसंज्ञा विहिता । इमाश्च विभक्तयः प्रथमादयः सप्तम्यन्ताः सुविदिताः । तत्र सप्तानां विभक्तीनां मध्ये द्वितीयादयो विभक्तयो द्विप्रकाराः । कारकविभक्तयः, उपपदविभक्तय इति भेदात् । कारकविभक्तयो नाम कारकत्वव्याप्यकर्मत्त्वादिनिमित्तिकाः । यथा – "कर्मणि द्वितीया" (२–३–२) "कर्तृकरणयोस्तृतीया" (२–३–१८) इत्यादिभिस्सूत्रैर्विधीयमानाः कर्मत्वादिनिमित्तिकाः । उपपदविभक्तयो हि समीपस्थपदनिमित्तिकाः । यथा – "अन्तरान्तरेणयुक्ते" (२–३–४) इत्यादिभिर्विधीयमाना द्वितीयादयः । एतादृशेषूपपदविभक्तिविधायकेषु सूत्रेष्वन्यतममिदं सूत्रम् – "अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते" (२–३–२९) इति अष्टाध्याय्यां द्वितीयाध्याये तृतीयपादे एकोनत्रिंशत्तमं सूत्रमिदम् । अत्र "अपादाने पञ्चमी" (२–३–२८) इति सूत्रतः पञ्चमीति पदमनुवर्तते । अन्यश्च आराच्च इतरश्च ऋते च दिक्शब्दश्च अञ्चूत्तरपदञ्च आच् च आहि च एतेषां समाहारः = अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहि, सूत्रे युक्तशब्दो भावक्तान्तः । योग इत्यर्थः । तथा च अन्यादिभिरष्टाभिः शब्दैर्योगे प्रातिपदिकात् पञ्चमी स्यादिति सूत्रार्थो लभ्यते ।

**अत्र वृत्तिकारादयः**

अस्मिन् सूत्रे आदावेव "अन्य" इति शब्दः श्रूयते । अयञ्चान्यशब्दोऽन्यपर्यायबोधकः । तथा च अन्यार्थबोधकस्य सर्वस्यापि शब्दस्य ग्रहणम् । अर्थद्वारक एव हि शब्दस्य शब्दान्तरेण योगो भवति । तस्मादर्थस्येदं ग्रहणं विज्ञास्यते । उदा – अन्यो देवदत्तात् , भिन्नो देवदत्तात् , विलक्षणो देवदत्तात् । अत्र यद्यपि शङ्कयमुदियात् – "अन्य" शब्देनार्थस्य ग्रहणे "इतर" शब्दस्यापि तत्पर्यायत्वेन तद्योगेऽपि "अन्य" इति निमित्तेनैव पञ्चम्याः सिद्धौ सूत्रे पुनः "इतर" शब्दग्रहणस्य का वाऽऽवश्यकता ? इति । अत्रैवं समाधानम् – इतरग्रहणं प्रपञ्चार्थम् । तथा च सूत्रे इतरग्रहणमनावश्यकमेवेति लभ्यते ।

**अत्र प्रश्नः**

सूत्रे "इतर" ग्रहणस्यानावश्यकताप्रतिपादनं नोचितम् । तथा हि – "उदारो दातृ – महतोरितर-स्त्वन्यनीचयोः" इत्यमरसिंहवचनानुसारम् इतरशब्दो नीचार्थमर्थात् पामररूपमप्यर्थं बोधयति । तथा च यज्ञदत्तात् इतरो देवदत्तः इत्येवमादौ नीचार्थस्यापीतरशब्दस्य योगे पञ्चम्याः सिद्धये "इतर" ग्रहणमावश्यकमेव । कथं वा तस्य प्रपञ्चार्थत्वम् ? इति ।

**अत्रोत्तरम्**

सूत्रे "इतर" ग्रहणमनावश्यकमेव । तथा हि – "पञ्चमी विभक्ते" (२–३–४२) इति सूत्रेण निर्धार्यमाणस्य यत्र भेद एव प्रतीयते तत्र पञ्चमी विहिता । यथा – अस्मात् तारो मन्द्रो वा । प्रकृतेऽपि नाम यज्ञदत्तात् इतरो देवदत्त इत्येवमादौ नीचार्थस्य "इतर" शब्दस्य योगेऽपि निरुक्तरीत्या "पञ्चमी विभक्ते" (२–३–४२) इत्येव पञ्चम्याः सिद्धौ सूत्रेऽस्मिन् "इतर" ग्रहणं प्रपञ्चार्थमेव – इति ।

अनया रीत्याऽस्मिन् सूत्रे "इतर" शब्दस्य प्रपञ्चार्थत्वे काशिकापदमञ्जरी–न्यासकार–सिद्धान्तकौमुदी– तत्त्वबोधिनीकाराणाम् ऐककण्ठ्यमेव ।

**अत्र नागेशोपाध्यायः**

सूत्रे "अन्य" शब्देन नार्थग्रहणम् । अत "इतर" शब्दयोगेऽपि पञ्चम्याः सिद्ध्यर्थं तद्ग्रहणमावश्यकमेव। तथा हि – घटादन्य इत्यत्र स्वप्रतियोगिकभेदसंबन्धः पञ्चम्यर्थः । स्वम् = घटः, तत्प्रतियोगिको यो भेदः = घटो नेति भेदः । तत्संबन्धः पटे वर्तते । इत्थमत्र प्रकृत्यर्थस्य घटपदार्थस्य अन्यस्मिन्नन्वयः । एवमितरशब्दयोगेऽपि प्रकृतसूत्रेण पञ्चमी । तथा चान्यशब्दयोगे, इतरशब्दयोगे चानेन पञ्चमी विभक्तिर्विधीयते । एवं स्थिते "अन्य इत्यर्थग्रहणम् । इतरग्रहणं प्रपञ्चार्थम्" इति प्राचामुक्तिर्न साध्वी । भाष्ये तथाऽनुक्तत्वात् , "अन्य" इत्येव सिद्धे पुनः "इतर" ग्रहणाच्च । अन्यथा अनयोरुभयोः शब्दयोः समानार्थकत्वेन "इतर" ग्रहणस्य वैयर्थ्यापत्तिः । अतः "अन्य" इत्यत्र नार्थस्य ग्रहणम् ।

**अत्र शङ्का**

"अन्य" इत्यर्थग्रहणमेव । तथा हि – घटाद् भिन्नः पट इत्यत्र पञ्चमीविभक्तिरिष्टा । सा च पञ्चमी प्रकृतसूत्रेणैव साधनीया । किन्तु सूत्रेऽत्र भिन्नशब्दो नोपात्तः । "अन्य" शब्दस्यार्थपरत्वे तु अन्य–भिन्नयोः समानार्थकत्वेन भिन्नशब्दयोगेऽपि पञ्चमी प्रवर्तते । "अन्य" शब्देनार्थग्रहणाभावे तु कथं वाऽत्र प्रयोगे पञ्चमी ? इति ।

**अत्र शङ्कापरिहारः**

"अन्य" इत्यत्र नार्थग्रहणम् । घटाद् भिन्न इत्यादौ पञ्चमी सिध्यत्येव । "ध्रुवमपायेऽपादानम्" (१–४ –२४) इति घटस्यापादानत्वेन "अपादाने पञ्चमी" (२–३–२८) इति पञ्चमी प्रवर्ततेऽत्र । एवञ्च घटाद् भिन्नः इत्यत्र पञ्चमी न उपपदविभक्तिः, किन्तु कारकविभक्तिः । अत्र यद्यपि शङ्केयं जायते यथा – वृक्षात् पर्णं पततीत्यादौ यथा वृक्षपर्णयोरपायोऽर्थाद्विश्लेषो वर्तते न तथा घटाद् भिन्नः पट इत्यत्र घटपटयोर्विश्लेषः । अतः कथं वाऽत्र घटस्यापादानत्वमिति । इयं शङ्का इत्थं समाधीयते – "ध्रुवमपायेऽपादानम्" (१–४–२४) इति सूत्रे अपायशब्देन न केवलं विभागस्य ग्रहणम् , किन्तु भेदस्यापि । तथा च विभागावधित्वेन वृक्षस्येव पटभेदावधित्वेन घटस्याप्यपादानत्वं सिध्यत्येव । अस्मिन् सूत्रेऽपायशब्देन भेदस्यापि ग्रहणे कश्चित् दृष्टान्तो वर्तते यथा –"पञ्चमी विभक्ते" (२–३–४२) इति

सूत्रम्। अत्र सूत्रे विभक्तशब्दो भावक्तान्तः । एवञ्च विभक्तम् = विभागः = अपायः । तथा च माथुराः पाटलिपुत्रकेभ्य आढ्यतरा इत्यादावपादानपञ्चम्या एव सिद्धे "पञ्चमी विभक्ते" (२–३–४२) इति सूत्रमनावश्यकमेव । एवञ्चापायशब्देन भेदस्यापि ग्रहणेन घटाद् भिन्नः पट इत्यादावपादानपञ्चम्यैवा भीष्यर्थे सिद्धे तदर्थं प्रकृते सूत्रेऽर्थात् "अन्यारात्" इत्यादिसूत्रेऽन्यशब्दस्यार्थपरत्वं नाश्रयणीयमेव– इति।

**पुनश्शङ्का**

"ध्रुवमपायेऽपादानम्" (१–४–२४) इति सूत्रेऽपायशब्देन भेदस्य ग्रहणेऽपि घटाद् भिन्नः पट इत्यादौ घटादीनामपादानत्वं न सिध्यत्येव । यतः भिदिर् विदारण इति धातोर्द्विधाभवनानुकूलो व्यापारोऽर्थः । तथा च नदी कूलं भिनत्तीत्यादौ स व्यापारो दृश्यते । घटात् पटो भिन्न इत्यत्र तु तादृशद्विधाभवनानुकूल-व्यापारस्याभावेन कथं वाऽपादानत्वम् ? इति ।

**पुनस्समाधानम्**

भिदिर् विदारण इत्यत्र भेदज्ञानविषयत्वमपि विदारणम् । भेदः = घटपटयोर्भेदः । तद्विषयकं ज्ञानम् = पटो घटाद् भिन्न इति ज्ञानम् । तद्विषयत्वं पटादौ संभवतीत्यन्वयः । एकत्वेन गृहीतस्य घटपटादिवस्तुजातस्य भेदज्ञानविषयत्वेन बोधे, बुद्धिपरिकल्पितविदारणस्य घटाद् भिन्नः पट इत्यत्रापि सत्त्वेन समन्वयः । तथा च घटाद् भेदः पटे इत्यत्राप्यनयैव रीत्याऽपादानत्वं तन्निमित्तिका पञ्चमी च सिध्यति । एवं सति घटादन्यः पट इत्यादावन्यशब्दयोगेऽपि प्रकृतरीत्यैवापादानत्वं साधयितुं शक्यमिति तु न । अन्यशब्दस्य क्रियावाचित्वाभावेनापादानत्वाप्राप्त्या तद्योगे पञ्चमीविधानाय "अन्यारात्" (२–३–२९) इत्यादिसूत्रेऽन्यग्रहणमावश्यकमेव । अत एव घटः पटो नेत्यत्र न पञ्चमी । एवञ्च "अन्यारात्" (२–३–२९) इत्यादिसूत्रेऽन्यग्रहणं स्वरूपपरमेव । तथा च इतरशब्दयोगे पञ्चम्याः सिद्धये "इतर" ग्रहणं चरितार्थमेव, न तु प्रपञ्चार्थमिति नागेशसिद्धान्तः ।

**अत्र भट्टाचार्याः**

व्युत्पत्तिवादे भट्टाचार्या अपि इत्थमेवाभिप्रयन्ति । तत्र हि गुणो द्रव्याद्भिन्न इत्यत्र "अन्यारात्" इति सूत्रेणैव पञ्चमी । अन्यशब्दस्यान्यार्थकपदपरत्वादिति बहवः – इति व्याख्याय वस्तुतस्तु अन्येतरपदं स्वरूपपरमेव । अर्थपरत्वे घटादन्य इतिवत् घटादेक इति प्रयोगापत्तेः – इत्येवम् "अन्य" शब्दस्य स्वरूपपरत्वमेव सिद्धान्ते प्रतिपादयामासुः ।

**अत्र प्रश्नः**

अन्यो यज्ञदत्तो देवदत्तात् इत्यत्र देवदत्तशब्दादिव प्रकृतसूत्रेण यज्ञदत्तशब्दादपि "अन्य" शब्दयोगमाश्रित्य पञ्चमी कुतो न ? इति ।

**अत्रोत्तरम्**

देवदत्तशब्दादुत्पन्नया पञ्चम्या उभयगतस्याप्यन्यत्वस्य प्रतिपादितत्वेन पुनः यज्ञदत्तशब्दान्न पञ्चमी । अत्र प्रसङ्गात् "षष्ठी शेषे" (२–३–५०) इति सूत्रस्थभाष्यसंवादः किञ्चिदिव विचार्यते । तत्र हि "षष्ठी शेषे इति चेद्विशेष्यस्य प्रतिषेधः" इति वार्तिकम् । षष्ठी शेष इति चेद्विशेष्यस्य प्रतिषेधो वक्तव्यः । राज्ञः पुरुष इत्यत्र राजा विशेषणम् , पुरुषो विशेष्यः । तत्र प्रातिपदिकार्थो व्यतिरिक्त इति कृत्वा प्रथमा न प्राप्नोति । तत्र षष्ठी स्यात् । तस्याः प्रतिषेधो वक्तव्यः । "तत्र प्रथमाविधिः" तत्र षष्ठीं प्रतिविध्य प्रथमा विधेया । राज्ञः पुरुषः। अनया रीत्या वार्तिककारैराक्षेपे विहिते भाष्यकारैरयमाक्षेपः परिहृतो यथा– "उक्तं पूर्वेण । न वा वाक्यार्थत्वात् इति । यदत्राधिक्यं स वाक्यार्थः" इति । राज्ञः इत्येतत्पदसन्निधाने पुरुषस्य संबन्धित्वं प्रतीयते, नान्यथा । पुरुषप्रातिपादिकं तु स्वार्थमात्र वर्तत इति प्रथमा सिध्यतीति तदाशयः कैयटे वर्णितः। एवञ्च राजशब्दाद्विहितया षष्ठ्या राज्ञः, पुरुषस्य च संबन्धो बोध्यत इति पुनस्तत्र संबन्धबोधनाय न षष्ठीति भाष्यकाराणामाशयः । अयमर्थो भर्तृहरिणापि प्रतिपादितो यथा –

द्विष्ठोऽप्यसौ परार्थत्वाद् गुणेषु व्यतिरिच्यते ।
तत्राभिधीयमानस्सन् प्रधानेऽप्युपयुज्यते ॥ इति ।

असौ = संबन्धः, द्विष्ठोऽपि = उभयनिष्ठोऽपि, परार्थत्वात् = गुणानां प्रधानं प्रति विशेषणत्वेन विवक्षितत्वात् , गुणेषु = अप्रधानेषु, व्यतिरिच्यते = उद्भूततया भासते । तत्र = अप्रधानेषु, अभिधीयमानः सन् = षष्ठ्या बोध्यमानस्सन् , प्रधानेऽपि = विशेष्येऽपि, उपयुज्यते = विनियुज्यत इति कारिकार्थः । तत्तुल्यत्वात् प्रकृतेऽपि = अन्यो यज्ञदत्तो देवदत्तात् इत्यादिप्रयोगेऽपि यज्ञदत्तशब्दात् पञ्चम्या वारणे प्रकृतभाष्य – वाक्यपदीय**प्रघट्टकोऽत्र** स्वीकृतः । एवञ्च देवदत्तशब्दादुत्पन्नया पञ्चम्या उभयगतान्यत्वस्य प्रतिपादितत्वेन पुनः यज्ञदत्तशब्दान्नानेन पञ्चमी विभक्तिः – इति ।

एतावता "अन्य" शब्दयोगे पञ्चमीविचारावसरे इतरग्रहणं न प्रपञ्चार्थमपि तु इतरशब्दयोगे पञ्चम्यर्थमावश्यकमेवेति निरूपितम् । इतः परम् "आरात्" इत्यादीनां शब्दानां योगे पञ्चम्याः प्रवृत्तिर्विचार्यते ।

(२)"सकृत्सहैकवारे स्यादाराद्दूरसमीपयोः" इत्यमरकोशप्रामाण्येन "आरात्" इत्यव्ययं दूरार्थकम् , समीपार्थकञ्च । उदा – आराद् देवदत्तात् , आराद् यज्ञदत्तात् । अत्र दूरं निकटं ग्रामस्य ग्रामाद्वा – इत्यत्रेव "दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्" (२–३–३४) इति प्राप्तायाः षष्ठ्या अपवादत्वेन पञ्चमी विधीयते ।

(३) इतरशब्दयोगे उदाहरणम् – घटादितरः ।

(४) "प्रथग्विनान्तरेणर्तेहिरुङ्नाना च वर्जने" इति कोशानुसारम् ऋते शब्दः (अव्ययम्) वर्जनार्थकः उदा – ऋते कृष्णात् नोत्पद्यते सुखम् । अत्र कृष्णशब्दो लक्षणया कृष्णभक्तिपरः । तथा च कृष्णभक्त्यभावे सुखोत्पत्त्यभाव इत्यर्थः । एवं कृष्णाद् ऋते दुःखमित्युदाहरणे कृष्णभक्त्यभाव-

समानाधिकरणं दुःखमिति बोधः । कृष्णाद् ऋते नरः शोच्य इत्यत्र कृष्णभक्त्यभाववान् नरः शोच्य इति बोधः ।

**अत्र प्रश्नः**

प्रकृतसूत्रानुसारम् "ऋते" शब्दयोगे पञ्चमी विधेया, किन्तु क्वचित् एतद्योगे द्वितीया श्रूयते यथा –

(i) "यत्किञ्चिद् राजसूयम् ऋते सोमम्" । (ii) "न मामृते राम रमेत वाली" । (iii) "पुरुषाराधनम् ऋते" इत्येवमादौ । अतः एतादृशानां द्वितीयाविभक्त्यन्तघटितानां प्रयोगाणां कथं वा उपपत्तिः ? इति ।

**अत्र हरदत्तः**

"यत्किञ्चिद् राजसूयम् ऋते सोमम्" इति प्रयोगश्छान्दसः । अतस्तत्र दृष्टानुविधिश्छन्दसि भवति । इतरस्मिन् प्रयोगद्वये निरङ्कुशाः कवयः – इत्याशेते ।

**अत्र नागेशः**

"कर्मणि द्वितीया" (२–३–२) इति सूत्रे वार्तिकमिदं पठितं यथा –

उभसर्वतसोः कार्या धिगुपर्यादिशु त्रिषु ।
द्वितीयाऽऽम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते ॥ इति ।

उभयतः कृष्णं गोपा इत्यादीन्युदाहरणानि । अस्यां कारिकायां "दृश्यते" इति पदग्रहणेन वार्त्तिकोक्तशब्दानामपेक्षयाऽन्येषां शब्दानां योगेऽपि द्वितीया प्रवर्तत इत्यर्थो लभ्यते । तेन "ऋते" शब्दयोगे द्वितीयाऽपि भवत्येव । यथा – ऋते वातं वृक्षः पतति । अनया रीत्या प्रागुक्तप्रयोगविषये द्वितीया साधयितुं शक्या । अतो न दोषः – इति मन्यते ।

(५) दिक्शब्दयोगे पञ्चमी प्रवर्तते । यथा – पूर्वो ग्रामात् पर्वतः । ग्रामावधिकपूर्वत्ववान् पर्वत इत्यर्थः। अत्र "दिगञ्चूत्तरपद" इत्येव सिद्धे "दिक्शब्द" इति शब्दग्रहणेन दिशि दृष्टः शब्दः = दिक्शब्द इत्येवमुत्तरपदलोपसमासः । "शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम्" इति वार्त्तिकात् । शाकप्रियः पार्थिवः = शाकपार्थिव इतिवत् । तेन यदा कदाचित् दृष्टेन सम्प्रति देश–काल–वर्तिना दिक्शब्देन योगेऽपि पञ्चमी प्रवर्तते । तत्र देशवृत्तिना योगे उदाहरणम् – पूर्वो ग्रामात् पर्वतः । कालवृत्तिना योगे उदाहरणम् – पूर्वो ग्रीष्मात् वसन्तः । अत्र दिशि दृष्टः शब्दो हि रूढ्या स्वीकार्यः । तेन इन्द्रो देवता अस्या इत्याद्यर्थे ऐन्द्र्यादीनां शब्दानां यौगिकानां योगे तु नेयं पञ्चमी । योगाद्रूढेर्बलीयस्त्वात् ।

**अत्र शङ्का**

प्रागुक्तरीत्याश्रयणे पूर्वकाय इत्यादौ पूर्वं कायश्चेति षष्ठ्यन्तेन विग्रहो नोपपद्यत एव । पञ्चम्या एव न्याय्यत्वात् । किञ्चात्र षष्ठीविभक्त्यन्तपदनिमित्तकः "पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे" (२–२–१) इत्येवमेकदेशिसमासश्च न घटत एव – इति ।

**अत्र शङ्कावारणम्**

द्विरुक्तस्य परं रूपमाम्रेडितं स्यादित्यर्थके "तस्य परमाम्रेडितम्" (८–१–२) इति सूत्रे दिक्शब्दस्य = परशब्दस्य योगेऽपि पञ्चम्याः स्थाने "तस्य" इति षष्ठ्या निर्देशादवयववाचिपरादिशब्दयोगे षष्ठी नेति ज्ञाप्यते । अत्र परमगुरुचरणाः – दिक्शब्दार्थेऽवधितयान्वितार्थबोधकादेव पञ्चमी नान्यस्मादिति बोधनद्वारा इदं ज्ञाप्यते । एवञ्च तादृशपूर्वशब्दप्रयोगेऽपि षष्ठीसमर्थनार्थमुपायान्तरं नानुसर्तव्यम् – इति व्याचख्युः ।

(६) अञ्चूत्तरपदके शब्दे परे पञ्चम्या उदाहरणम् – प्राक् ग्रामात् नदी । प्रत्यक् ग्रामात् नदी । प्र उपसर्गपूर्वकात् गत्यर्थकात् अञ्चु धातोः "स्पृशोऽनुदके क्विन्" (३–२–५८) इत्यतः क्विनित्यनुवर्तमाने "**ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां** च" (३–२–५९) इति क्विन् प्रत्ययः । स च सर्वलोपी । प्र+अञ्च् इत्यवस्थायां "क्विन्प्रत्ययस्य कुः" (८–२–६२) इति धातोश्चकारस्य कुत्वेन ककारे, "अनिदितां हल उपधायाः क्ङिति" (६–४–२४) इति सूत्रेण उपधायाः नकारस्य लोपे, सवर्णदीर्घे प्राक् इति जाते ततः सुप्रत्यये हल्ङ्यादिलोपे च निष्पन्नं प्रागिति रूपमञ्चूत्तरपदकम् । इत्थमत्राञ्चूत्तरपदकशब्दयोगमादाय ग्रामशब्दात् पञ्चमी ।

**अत्र प्रश्नः**

अञ्चूत्तरपदकाः प्रागादयः शब्दा दिग्वाचका एव । तथा च पूर्वो ग्रामादित्यादाविव "दिक्शब्द" इति निमित्तेनैव प्राक् ग्रामादित्यादावपि पञ्चम्याः सिद्ध्या सूत्रे पुनः "अञ्चूत्तरपद" ग्रहणं किमर्थम् ? इति ।

**अत्रोत्तरम्**

अस्मिन् सूत्रे "अञ्चूत्तरपद" ग्रहणाभावे "षष्ठ्यतसर्थप्रत्ययेन" (२–३–३०) इति षष्ठी प्राप्नोति । तथा हि – अतसर्थकप्रत्ययान्तेन योगे षष्ठी प्रवर्तत इति तदर्थः । उदा – ग्रामस्य दक्षिणतः । अत्र किञ्चिद् विव्रियते **तद्धितप्रकरणे** सूत्राणीमानि लक्ष्यन्ते यथा – (१) "दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः" (५–३–२७) सप्तम्याद्यन्तेभ्यो दिशि रूढेभ्यो दिग्देशकालवृत्तिभ्यः स्वार्थेऽस्तातिः प्रत्ययः स्यादिति तदर्थः । उदा – पूर्वस्यां दिशि, पूर्वस्याः दिशः, पूर्वा दिक् इत्यर्थे पुरस्तात् । (२) "दक्षिणोत्तराभ्यामतसुच्" (५–३–२८) अस्तातेरपवादः । दक्षिणतः, उत्तरतः । (३) "उपर्युपरिष्टात्" (५–३–३१) अस्तातेर्विषये ऊर्ध्वशब्दस्य "उप" आदेशः स्यात् रिल् रिष्टातिल् च प्रत्ययौ । उपरि उपरिष्टात् वा वसति । (४) "पश्चात्" (५–३–३२) अपरस्य पश्चभाव आतिश्च प्रत्ययोऽस्तातेर्विषये । पश्चात् । (५) "एनबन्यतरस्यामदूरेऽपञ्चम्याः" (५–३–३५) अवध्यवधिमतोः सामीप्ये एनप् वा स्यात्पञ्चम्यन्तं विना । पूर्वेण ग्रामम् । (६) "दक्षिणादाच्" (५–३–३६) अस्तातेर्विषये। दक्षिणा वसति । (७) "आहि च दूरे" (५–३–३७) दक्षिणात् दूरे आहि स्यात् । दक्षिणाहि। (८) "उत्तराच्च" (५–३–३८) उत्तराहि । इत्थं विहितानां प्रत्ययानाम् "अतसर्थप्रत्ययाः" इति व्यवहारः । एवञ्च प्राच्याम् , प्राच्याः, प्राची वेत्यर्थे प्राचीशब्दात् "दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः" (५–३–२७) इति सूत्रेण अस्ताति प्रत्यये "अञ्चेर्लुक्"

(५–३–३०) इति सूत्रेण तस्य लुकि "लुक्तद्धितलुकि" (१–२–४९) इति सूत्रेण स्त्रीप्रत्ययस्य ("उगितश्च" इति विहितस्य ङीपः) लुकि शब्दाधिकारप्रक्रियायां प्राक् इति रूपम् । एवञ्चात्र प्रत्ययलक्षणेन अतसर्थकप्रत्ययस्य अस्तातेः सत्त्वेन तद्योगे "षष्ठ्यतसर्थप्रत्ययेन" (२–३–३०) इति सूत्रेण ग्रामादिशब्देभ्यः प्राप्तायाः षष्ठ्या अपवादत्वेन प्रकृतसूत्रेऽञ्चूत्तरपदग्रहणमावश्यकमिति सिद्धम् । एवं स्थिते "षष्ठ्यतसर्थप्रत्ययेन" (२–३–३०)इति सूत्रे भाष्ये प्रकृतांशसंबद्धः कश्चन विशेषो लक्ष्यते यथा – "अथ प्रत्ययग्रहणं किमर्थम् ?" इति प्रश्नः कृतः । अतसः प्रत्ययस्य, कदाचित्तद्भिन्नस्य च सत्त्वेऽपि "प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणम्" इति परिभाषया तद्भिन्नस्याग्रहणेन प्रत्ययस्यैव ग्रहणेन "षष्ठ्यतसर्थेन" इत्येव सिद्धे सूत्रे प्रत्ययग्रहणस्य काऽऽवश्यकतेति प्रष्टुराशयः । तत्रैवं समाहितम् – "इह मा भूत् । प्राक् ग्रामात् , प्रत्यक् ग्रामात् ।" इति । प्रत्ययग्रहणमधिकं क्रियमाणं श्रूयमाणप्रत्ययग्रहणार्थं विज्ञास्यत इति लुप्तेऽस्तातौ षष्ठी न प्रवर्तत इति समाधातुराशयः । ततः प्रोक्तं तत्र यथा – "अञ्चूत्तरपदस्याप्येतदुक्तम् । तत्रान्यतरत् शक्यमवक्तुम्" इति । एवञ्च प्रकृतभाष्यपरिशीलनेन "षष्ठ्यतसर्थप्रत्ययेन" (२–३–३०) इति सूत्रे प्रत्ययग्रहणेनापि प्राक् ग्रामादित्यादौ षष्ठी निवारयितुं शक्यते। इत्थमत्र "अञ्चूत्तरपद" योगे पञ्चमी विचारिता ।

(७) "आच्" प्रत्ययान्तशब्दयोगे पञ्चम्या उदाहरणम् – दक्षिणा ग्रामात् । अत्र "दक्षिणादाच्" (५–३–३६) इति आच् प्रत्ययः ।

(८) "आहि" प्रत्ययान्तशब्दयोगे पञ्चम्या उदाहरणम् – दक्षिणाहि ग्रामात् । उत्तरा हि ग्रामात् । अत्र "आहि च दूरे" (५–३–३७) "उत्तराच्च" (५–३–३८) इति च सूत्रेण दक्षिणोत्तराभ्याम् आहि प्रत्ययः ।

एतावता प्रकृतसूत्रार्थविचारो यद्यपि संपन्नः, किन्तु शङ्केयमुदेत्यत्र – प्रभृतिशब्दयोगेऽपि पञ्चमी दृश्यते यथा – भवात्प्रभृति सेव्यो हरिरित्यादौ । तद्विधायकं तु शास्त्रं नोपलभ्यते – इति ।

इयं शङ्केत्थं समाधीयते – "अपादाने पञ्चमी" (२–३–२८) इति सूत्रे वार्तिकमिदं दृश्यते– "यतश्चाध्व-कालनिमानं ततः पञ्चमी" इति । यदाश्रित्याध्वकालौ परिच्छिद्येते तत्र पञ्चमी इति तदर्थः । उदा – गवीधुमतः साङ्काश्यं चत्वारि योजनानि, कार्तिक्या आग्रहायणी मासे । ततो वार्तिकप्रत्याख्यानावसरे "न वक्तव्यम् , इदमत्र प्रयोक्तव्यं सन्न प्रयुज्यते – गवीधुमतो निःसृत्य साङ्काश्यं चत्वारि योजनानि । इदमत्र प्रयोक्तव्यं सन्न प्रयुज्यते – कार्तिक्याः प्रभृति आग्रहायणी मासे" इति । द्वितीयोदाहरणे भाष्यकाराणां प्रयोगात् "प्रभृति" शब्दयोगे पञ्चमी प्रवर्तत इति सिध्यति । अत्र कैयटः – "भाष्यकारवचनात् प्रभृतियोगे पञ्चमी" इति । अत्र "प्रभृतियोगे" इति कथनेन प्रभृत्यर्थकपदान्तरयोगे, तदभावेऽपि तदर्थप्रतीतौ च पञ्चमी प्रवर्तत इत्यर्थः सूच्यते । तेन प्रभृत्यर्थकस्य "आरभ्य" इति पदस्य योगेऽपि पञ्चमी। यथा – भवादारभ्य सेव्यो हरिः । मरणान्तकालस्य भवोऽवधिः । तथा च मरणान्तकालावधि-भावकालमादाय तावत्कालं हरिः सेव्य इत्यर्थः। तत्पदप्रयोगाभावेऽपि तदर्थयोगे पञ्चमी यथा – कार्तिक्या आग्रहायणी मासे ।

एवं स्थिते “आरभ्य” इति पदस्य “गृहीत्वा” इत्येतदर्थकत्वे तु कर्मत्वात् द्वितीया । यथा – आद्यक्षणमारभ्य, प्रातः कालमारभ्य । “प्रभृति” शब्दस्य तु धातुनिष्पन्नत्वाभावेन तदर्थस्य क्रियात्वाभावात् तद्विशेषणस्य कारकत्वाभावेन न द्वितीया । यदा तु “आरभ्य” इत्यस्य प्रथमक्रिया रूपमारम्भं कृत्वेत्यर्थस्तदा तद्योगे सप्तमी । यथा – “आरभ्य तस्यां दशमीं तु यावत् प्रपूजयेत्” । एवञ्च “आरभ्य” इत्यस्य (१) प्रभृत्यर्थकत्वे पञ्चमी । (२) गृहीत्वा इत्यर्थकत्वे द्वितीया । (३) प्रथमक्रियारूपमारम्भं कृत्वा इत्यर्थे सप्तमी – इत्येवं विभक्तित्रयं प्रवर्तते ।

**अत्र शङ्का**

ग्रामाद् बहिरित्यादौ बहिश्शब्दयोगे पञ्चमी दृश्यते लोके । तद्विधायकं तु नात्र लक्ष्यते । अतः कथमत्र पञ्चमी – इति ।

**अत्र समाधानम्**

“अपपरिबहिरञ्चवः पञ्चम्या” (२–१–१२) इति सूत्रेणाव्ययीभावसमासो विधीयते । “अप” इत्यादीनि चत्वारि अव्ययानि पञ्चम्यन्तेन समस्यन्त इति तदर्थः । उदा – अपविष्णु संसारः, परिविष्णु संसारः, बहिर्वनम् , प्राग्वनम् । विभाषाधिकारेऽस्य सूत्रस्य पाठेन समासाभावपक्षे अप विष्णोरित्येवमादयश्च व्यस्ताः प्रयोगाः सिध्यन्ति । अत्र किञ्चिद् विचार्यते – अप, परि इत्यनयोः योगे “पञ्चम्यपाङ्परिभिः” (२–३–१०) इति सूत्रेण, अञ्चूत्तरपदयोगे = प्रागित्यादियोगे “अन्यारात्” (२–३–२९) इत्यादि सूत्रेण च पञ्चमी विहिता । अत एतेषु त्रिषु अव्ययीभावसमासो युज्यते । बहिश्शब्दयोगे तु कथमपि पञ्चम्या विधानाभावेनाव्ययीभावविधानसामर्थ्यात् पञ्चमी । यथा – बहिर्वनात्। तेनात्र पञ्चम्यन्तेन समासे सति बहिर्वनमिति सिध्यति । एवं स्थिते “मणिबन्धादाकनिष्ठं करस्य करभो बहिः” इत्यमरसिंहवचने बहिश्शब्दयोगे “करस्य” इति कथं वा षष्ठी स्यादिति प्रश्नस्येदमुत्तरम् – पूर्वोक्तरीत्या बहिश्शब्दयोगे पञ्चम्या ज्ञापकसिद्धत्वेन “ज्ञापकसिद्धं न सर्वत्र”मिति परिभाषया सर्वत्र पञ्चम्या अभावेन षष्ठ्याः साधुत्वं वक्तव्यम्।अत एव तत्त्वबोधिन्याम् , अमरकोशस्य सुधाव्याख्यायाञ्च एतत् अमरसिंहवचनमुद्धृत्य – “ज्ञापकसिद्धं न सर्वत्रेति बहिर्योगे पञ्चमी न” इत्युक्तम्। अत एव च प्रकृतसूत्रशेखरव्याख्यावसरे गुरुप्रसादशेषकारा अस्मत्परमगुरुचरणा आहुर्यथा – “बहिश्शब्दयोगे पञ्चम्या एवेष्टत्वे “अन्यारात्” इति सूत्र एव बहिर्ग्रहणं कुर्यात् भगवान् पाणिनिः” इति ।

अनया रीत्या “अन्यारात्” (२–३–२९) इत्यादिसूत्रे किञ्चिदिव प्रस्तुतम् ।

# लटः शतृशानचावप्रथमासमानाधिकरणे

**विद्वान् बि. वि. वेङ्कटरमणः, जयपुरम्**

तृतीयाध्याये द्वितीयपादे इदं सूत्रं वर्तते । अनेन सूत्रेण लट्लकारस्य स्थाने अप्रथमासामानाधिकरण्ये सति शतृशानचाविति द्वौ आदेशौ विधीयेते । पचन्तं देवदत्तं पश्य, पचमानं देवदत्तं पश्येत्यादिकमुदाहरणम् । इदमेव सूत्रं भाष्यकृद्भिः कथं व्याख्यातमिति इदानीं परिशील्यते । एतत्सूत्रभाष्ये च एतदधिकृत्य त्रयः प्रश्नाः कृताः । तथा हि –

१. लकारस्य अप्रथमासामानाधिकरण्यं कथं युज्यते ?

२. अप्रथमासमानाधिकरणे इति पर्युदासो वा प्रसज्यप्रतिषेधो वा ?

३. प्रथमासामानाधिकरण्ये सति पचन् पठति, पचमानः पठति इत्यादिप्रयोगाः कथम् ?

तत्र प्रथमप्रश्नस्य अयमाशयः । "लः कर्मणि च भावे चाकर्मकेभ्यः" इति सूत्रेण लकारादयः कर्तरि कर्मणि च विहिताः । ते च क्रियाप्रधानमाख्यातमिति निरुक्तवचनात् तिङन्तघटितवाक्ये क्रियां प्रति गुणीभूतं कर्तारं, कर्मकारकं च अभिदधति । तथा च देवदत्तः ओदनं पचति, ओदनः पच्यते देवदत्तेन इत्यादिवाक्येभ्यः क्रियाप्रधानकबोधे जाते सति तत्र क्रियायां कर्तृकारकस्य कर्मकारकस्य च विशेषणत्वेन अन्वयः । देवदत्तकर्तृकविक्लित्त्यनुकूलव्यापारः इति, ओदनकर्मकविक्लित्त्यनुकूलव्यापार इति च । एवञ्च लकारस्य देवदत्तेन सह, ओदनेन सह प्रथमान्तेनैव सामानाधिकरण्यं नियमेन वर्तते । न त्वन्येन । यदि देवदत्तौदनयोः अन्यस्यां क्रियायाम् अन्वयः स्यात् तदा क्रियान्तरनिरूपितां कारकान्तरशक्तिमादाय विभक्त्यन्तरोत्पत्तौ लकारस्य अप्रथमासामानाधिकरण्यं युज्येत । यथा पक्ववन्तं देवदत्तं पश्य, पक्वेन ओदनेन तृप्तः इत्यादिस्थले देवदत्तस्य पाकक्रियाकर्तृत्वेपि, ओदनस्य पाकक्रियाकर्मत्वेपि अन्यस्यां क्रियायाम् अन्वयात् देवदत्तौदनवाचकाभ्यां यथाक्रमं द्वितीयातृतीययोरुत्पत्तौ तद्विशेषणीभूतस्य पच्धातुघटितस्य शब्दस्य अप्रथमासामानाधिकरण्यं युज्यते । किन्तु तत्र पच्धातुघटितशब्दस्य कृदन्तत्वेन "सत्त्वप्रधानानि नामानि" इति निरुक्तवचनात् द्रव्यस्य प्राधान्यात् तस्य च क्रियान्तरं प्रत्यन्वयस्य संभवात् उक्ता व्यवस्था उपपद्यते । प्रकृते तु तिङन्तघटितवाक्ये तिङन्तार्थस्य क्रियाया एव प्राधान्यात् तत्र विशेषणीभूतस्य कारकस्य क्रियान्तरं प्रत्यन्वयासंभवः । एकत्र विशेषणतया अन्वितस्य अन्यत्र विशेषणायोगादिति नियमात् । अवश्यमभ्युपेयो अयं न्यायः । अन्यथा शूलिनं पूजयेत्यादौ शूलिनि विशेषणीभूतस्य शूलस्यापि पूजनकर्मत्वापत्तेः । अत एव गदाधरेणापि नियमोयं व्युत्पत्तिवादे बहुत्र उल्लेखितः । धातोरिव घञन्तस्यापि पाकादौ शक्तिमङ्गीकुर्वतां मतमनुवदन् गदाधार आह

एकविशेषणत्वेन उपस्थितस्य अन्यत्र विशेषणत्वेन अन्वयस्य अव्युत्पन्नतया तत्र प्रत्ययार्थविशेषणपाकादेः न कर्मत्वे विशेषणतया अन्वय इति[1] ।

तस्मात् लादीनां नियमेन प्रथमान्तेनैव सामानाधिकरण्यात् अप्रथमासामानाधिकरण्यं कुत्र संभवति येनेदं सूत्रं सार्थकं स्यादिति प्रश्नस्य आशयः । तदुक्तं भाष्यकृता लस्याप्रथमासामानाधिकरण्यायोगात् आदेशानुपपत्तिः यथा अन्यत्र इति ।

द्वितीयप्रश्नस्य आशयस्तु स्पष्ट एव । पर्युदासपक्षे लादीनां प्रथमान्तभिन्नेन सामानाधिकरण्ये सति शतृशानचौ कर्तव्यौ इति सूत्रार्थः । प्रसज्यप्रतिषेधे तु विना निमित्तं लटः शतृशानचौ भवतः, प्रथमासामानाधिकरण्ये तु नेति सूत्रार्थः फलति । एवञ्च पर्युदासमाश्रित्य प्रथमो अर्थः आद्रियते वा उत प्रसज्यप्रतिषेधमाश्रित्य द्वितीयोर्थः आद्रियते वा इति प्रश्नस्य आशयः । न च कथमयं विकल्पः युज्यते । यतो हि प्रसज्यप्रतिषेधपक्षे क्रियया साकम् नञर्थस्य अन्वयात् सामर्थ्याभावेन समासस्यैव असङ्गतेः । प्रकृते तु अप्रथमासमानाधिकरणे इति समासेन निर्देशात् पर्युदास एवेति निश्चये सति प्रसज्यप्रतिषेधपक्षस्य आशङ्का कथं सङ्गच्छते इति वाच्यम् । लक्ष्यानुरोधात् बहुत्र तथा आश्रयणात् । यथा वाक्ष इत्यादिलक्ष्यसिद्धये अनचि चेत्यत्र समासे सत्यपि प्रसज्यप्रतिषेधः आश्रितः । अतः अत्र तत्पक्षाशङ्कायां न दोषः ।

तृतीयस्य आशयोपि स्पष्ट एव । सूत्रे स्पष्टतया अप्रथमासामानाधिकरण्ये सत्येव शतृशानचोः विधानात् पचन् पठति देवदत्तः, पचमानः पठति देवदत्तः इत्यादौ प्रथमान्तेनैव सामानाधिकरण्यात् कथं शतृशानचौ सङ्गच्छेते । न चैतौ प्रयोगौ असाधू इत्येव मन्तव्यौ इति वाच्यम् । काव्येषु, लोके च बहुधा प्रयोगदर्शनात् । तस्मात् कथं ते प्रयोगाः समर्थनीयाः इति ।

प्रश्नानां समाधानानि –

प्रथमप्रश्नस्य इदं समाधानं तिङन्तस्थलेपि प्रथमान्तार्थस्य अन्यत्र क्रियायामन्वयः स्वीक्रियते । यदि एकत्र विशेषणतया अन्वितस्य अन्यत्र विशेषणतायोगः इति नियमम् उल्लङ्घ्यापि तथा अन्वयस्वीकारे अपचदोदनं देवदत्तः इत्यत्रापि तथा अन्वयापत्तिरिति वाच्यम् । स्वभावात् । न क्वचिद्योग इति कृत्वा सर्वत्र योगेन भवितव्यम् । क्वचिद्वायोग इति सर्वत्रायोगेन । तद्यथा समानमीहमानानां चाधीयानानां च केचिदर्थै युज्यन्ते । अपरे नेति । तस्मात् लटः अप्रथमासामानाधिकरण्यं युज्यते । लङस्तु न । तस्मात् क्षत्यभावः । अथवा अनुमानप्रमाणमत्र आश्रीयते । यथा धूमं दृष्ट्वा वह्निरनुमीयते, तथा आदेशं दृष्ट्वा अनुमीयते यत् अत्र लटः अप्रथमासामानाधिकरण्यं वर्तते इति ।

---

[1] गदाधरप्रणीतव्युत्पत्तिवादः – पृ. सं. ९ – तिरुपतिस्थ राष्ट्रियसंस्कृतविद्यापीठप्रकाशितम् ।

नन्विदं न सङ्गच्छते । प्रत्यक्षतः महानसादिषु वह्निधूमयोः साहचर्यं दृष्ट्वा पर्वते वह्निं सन्दिहानः धूमाद् वह्निं निश्चिनोति इति हि सिद्धान्तः । प्रकृते लस्य कुत्रापि प्रयोगाभावात् अप्रथमासामानाधिकरण्येन सह साहचर्यस्य अदर्शनात् कथमत्र अनुमानप्रमाणं प्रवर्तते इति चेदुच्यते । प्रत्यक्षतः लकारस्य अप्रथमासामानाधिकरण्याभावं निश्चित्य प्रकृतानुमानस्य बाधः उच्यते वा उत लकारस्य अप्रथमासामानाधिकरण्येन सह साहचर्यादर्शनात् व्याप्तिग्रहो नास्ति, तस्मात् कारणाभावेन अनुमितिः नोत्पद्यते इति प्रश्नाशयो वा इति विकल्प्यते । यदि प्रथमपक्षः चेदयुक्तः अयं पक्षः । अनन्यथासिद्धमेव प्रत्यक्षं अनुमानं बाधते । अन्यथासिद्धं तु अनुमानेन बाध्यते इति सिद्धान्तः । यथा अलातचक्रस्य आशुसञ्चारात् चक्रभ्रान्तिरुत्पद्यते । चक्रभ्रान्तेः प्रत्यक्षत्वेपि युगपदेनेकदिक्कस्य स्पर्शस्य अग्रहणरूपहेतुना तस्य प्रत्यक्षाभासत्वं निश्चीयते । उक्तं च हरिणापि –

स्पर्शप्रबन्धो हस्तेन यथा चक्रस्य सन्ततः ।
न तथालातचक्रस्य विच्छिन्नं स्पृश्यते हि यत् ॥[1] इति ।

तद्वत् प्रकृते लकाराप्रयोगनिमित्तकत्वेन अनन्यथासिद्धत्वात् प्रत्यक्षस्य अप्रथमासामानाधिकरण्याभावम् अवगाहमानस्य अनुमानेन बाध्यत्वात् नात्र प्रत्यक्षविरोधः ।

यदि साहचर्यादर्शनात् व्याप्तिग्रहो नोत्पद्यते । तस्मात् कारणाभावात् नानुमितिरिति द्वितीयः पक्षः चेदत्रापि उच्यते । प्रकृते लट् अप्रथमासामानाधिकरण्यवान् तदनुवादेन विहितादेशस्थानित्वादिति हि अनुमानम् । तत्र लस्य कुत्रापि प्रयोगाभावात् दृष्टान्ताभावेन साहचर्यादर्शनेपि यः स्थानी स आदेशसमानधर्मेति सामान्यमुखी व्याप्तिः आश्रीयते । तादृश्यां च व्याप्तौ प्रकृतहेतुसाध्ययोः साहचर्यस्य अपेक्षा नास्ति । हेतुसदृशस्य साध्यसदृशस्य च साहचर्यमेव प्रयोजकम् । एवञ्च प्रकृतेपि स्थानिभूतः इकारः आदेशभूतस्य यकारस्य तालुस्थानकत्वरूपसमानधर्मा इति हेतुसाध्यसदृशयोः व्याप्तिग्रहात् अनुमित्युत्पत्तौ न किञ्चिद्बाधकम् । न च केवलव्याप्तिग्रहेण अनुमितिरुत्पद्यते । किन्तु व्याप्तिविशिष्टपक्षधर्मताज्ञानेन । तथा च प्रकृते सदृशे हेतौ व्याप्तिं गृहीत्वा पक्षे प्रकृतहेतुसम्बन्धज्ञानेन कथम् अनुमितिरिति वाच्यम् । सामान्यमुख व्याप्तिस्थले केवलपक्षधर्मताज्ञानेनैव अनुमितिस्वीकारात् । उक्तं च गदाधरेणापि केवलव्यतिरेकिस्थले इव व्याप्तिज्ञानसहकारेण केवलपक्षधर्मताज्ञानात् अनुमितिः । अन्यथा केवलव्यतिरेक्यनुमानमात्रोच्छेदापत्तेः[2] इति ।

एवञ्च पूर्वोक्ताभिः युक्तिभिः लटः अप्रथमासामानाधिकरण्यस्य उपपादितत्वात् प्रथमः प्रश्नः समाहितः।

---

[1] वाक्यपदीयम् – वाक्यकाण्डम् – का. सं. २९१

[2] सिद्धान्तलक्षणगादाधरी – पृ. सं. २१ – तिरुपतिस्थ राष्ट्रियसंस्कृतविद्यापीठप्रकाशितम् ।

द्वितीयप्रश्नस्य समाधानं तु इत्थम् । पर्युदासपक्षे प्रथमान्तभिन्नेन सामानाधिकरण्ये सति प्रत्ययौ स्तः इति वक्तव्यम् । तथा सति कुर्वतो देवदत्तस्य अपत्यं कौर्वतः, पचतो देवदत्तस्य अपत्यं पाचतः इत्यत्र देवदत्तेन सापेक्षत्वात् तद्धितवृत्तिरेव न स्यात् । सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणयोगो नेति वचनात् । एवमेव कुर्वतो देवदत्तस्य भक्तिः कुर्वद्भक्तिः, पचतो देवदत्तस्य भक्तिः पचद्भक्तिः इत्यादिस्थलेष्वपि पदान्तरेण सापेक्षे सति समासो न स्यात् । तस्मात् अत्र पदान्तरनिरपेक्षत्वमङ्गीकार्यम्। तथा सति सामानाधिकरण्याभावात् आदेशाप्रसङ्गः दोषः । प्रसज्यप्रतिषेधे तु अयं दोषः परिहर्तुं शक्यते । तत्पक्षे हि प्रत्ययविधाने निमित्तं किमपि नास्ति । प्रत्ययानुत्पत्तौ प्रथमासामानाधिकरण्यम् अप्रयोजकमित्येव सूत्रार्थः । तस्मात् सर्वत्र पदान्तरनिरपेक्षं प्रत्ययोत्पत्तौ सापेक्षत्वाभावात् समासः तद्धितश्चोपपद्यते । किन्तु कुर्वती चासौ भक्तिश्च कुर्वद्भक्तिः, पचन्ती चासौ भक्तिश्च पचद्भक्तिः इत्यादौ आदेशाप्रसङ्गः । तत्र भक्तिरिति प्रथमान्तेन सामानाधिकरण्यात् । तस्य च शतृशानचोत्पत्तौ अप्रयोजकत्वात् ।

यद्यपि पक्षद्वयेपि दोषोस्त्येव तथापि प्रथमकल्पोक्ता दोषाः अस्मिन् पक्षे न भवन्ति । प्रत्ययोत्पत्तौ निमित्ताभावात् । किन्तु द्वितीयकल्पोक्ता दोषास्तु प्रथमपक्षेपि भवन्ति । तत्पक्षे हि अप्रथमान्तसामानाधिकरण्यं प्रत्ययोत्पत्तौ प्रयोजकम् । कुर्वती चासौ भक्तिश्चेत्यत्र तन्नास्तीति अयं दोषः तत्पक्षेपि । तस्मात् पर्युदासपक्षे दोषाधिक्यात् प्रसज्यप्रतिषेध एवाश्रीयते । तर्हि कुर्वती चासौ भक्तिश्चेत्यत्र कुर्वद्भक्तिरिति कथमिति चेदुक्तं भाष्यकृता "सिद्धं तु प्रत्ययोत्तरपदयोश्चेति वचनात्"[1] इति । प्रत्यये उत्तरपदे च परतः शतृशानचौ भवतः इति सूत्राङ्गतयैव वक्तव्यमिति तस्यार्थः । एवञ्च कुर्वद्भक्तिरित्यत्र कुर्वत्तर इत्यत्र च प्रथमासामानाधिकरण्ये सत्यपि प्रत्ययोत्तरपदयोः परयोः विशिष्य विधानात् शतृशानचौ भवतः इति न कश्चिद्दोषः ।

तृतीयप्रश्नस्य समाधानम् । वचनेन दोषं परिहृत्य प्रसज्यप्रतिषेधे स्थापिते सति तत्र प्रश्नः उदेति यत् प्रत्यये परे आदेशविधानात् आदेशस्य प्रत्ययनिमित्तकत्वं सिद्धम् । प्रत्यये सत्येव कृदन्तत्वेन प्रातिपदिकत्वमादाय सुबुत्पत्तौ तद्धितोत्पत्तिरिति अन्योन्याश्रयः । तस्मात् कथमिदं वचनं युज्यते इति प्रश्नः । एवम् उत्तरपदे परतः आदेशविधानात् तस्यापि आदेशनिमित्तकत्वं सिद्धम् । प्रत्यये सत्येव शतृशानचौ, ततः कृत्त्वात् सुबुत्पत्तिः, ततः समास इति उत्तरखण्डस्य उत्तरपदत्वं च सिद्ध्यतीति अन्योन्याश्रयः । अतः तत्परिहाराय लकारस्य कृत्त्वमादाय तत्प्रयुक्तप्रातिपदिकसंज्ञा कर्तव्या । अतः शत्रपेक्षां विनैव सुबुत्पत्तौ तरबादिप्रत्ययोत्पत्तिः, उत्तरखण्डस्य उत्तरपदत्वादिकं च सिद्ध्यति इति न कश्चिद्दोषः ।

---

[1] व्याकरणमहाभाष्यम् अ३ पा२ आ३ पृ. सं. २०० देहलीस्थ चौखाम्बा संस्कृतप्रतिष्ठानप्रकाशितम् ।

ननु यत्र सामान्यात् प्रत्ययोत्पत्तिः तत्र भवेन्नाम परिहारः । यथा तरबादिस्थले । किन्तु यत्र विशेषात् प्रत्ययोत्पत्तिः यथा अत इञित्यादिषु तत्र नास्ति परिहारः । तत्र शानचं विना अदन्तत्वाभावेन शानचमपेक्ष्यैव तद्धितोत्पत्तिः । तद्धिते सत्येव तन्निमित्तकः शानच् इति अन्योन्याश्रयः तदवस्थ एव । अपि च पचतितरां जल्पतितरामित्यत्रापि प्रत्ययपरकत्वात् तत्रापि शतृशानचोः प्रसङ्गः । अतस्तत्परिहाराय लटः शतृशानचौ इति सूत्रे नन्वोर्विभाषा इति सूत्रात् वाग्रहणमनुवर्त्य व्यवस्थितविभाषाश्रयणात् सर्वेष्टसिद्धिः । कौर्वतः, पाचतः इत्याद्यभीष्टस्थले भावावस्थामादाय आदेशः उपपद्यते । पचतितरामित्यादिषु च अभावावस्थामादाय आदेशः वार्यते इति न कश्चिद्दोषः । इदानीं तर्हि अप्रथमासमानाधिकरणे इति व्यर्थं स्यात् । व्यवस्थितविभाषयैव सकलेष्टसिद्धेरिति चेत् उच्यते । अप्रथमासमानाधिकरणे इति योगो विभज्यते । लटः शतृशानचौ इति सूत्रे विभाषेति पदमनुवर्तते । अप्रथमासमानाधिकरणे इति सूत्रे तु न । एवं च प्रथमसूत्रं प्रथमासामानाधिकरण्ये सति पाक्षिकशतृशानजर्थमिति सिध्यति । तस्मात् पचति इति तिङन्तं रूपं, पचन् इति शत्रन्तप्रयोगोपि सङ्गच्छते । अनया रीत्या पचन्नित्यादयः प्रयोगा अपि सिध्यन्ति । इति सर्वेपि प्रश्नाः समाहिताः भवन्ति।

# अकृतव्यूहाः पाणिनीयाः

**विद्वान् चिर्रावूरि कृष्णानन्तपद्मनाभः, शृङ्गगिरिः**

"अकृतव्यूहाः पाणिनीया" इति परिभाषा सिद्धान्तकौमुद्यां परिभाषाप्रकरणे श्रीमद्भट्टोजिदीक्षितैः व्याख्यायि । परिभाषेयं प्राचीनवैयाकरणैः व्याडित आरभ्य भट्टोजिदीक्षितपर्यन्तं सर्वैरपि व्याख्यातेति व्याख्यातारो वदन्ति । कैयटदीक्षितौ अस्यार्थं व्याख्याभेदमाश्रित्य भिन्नममन्यताम् । निमित्तापाये नैमित्तिकस्याप्यपाय इति अर्थं मन्यते स्म कैयटः । निमित्तं विनाशोन्मुखं दृष्ट्वा तत्प्रयुक्तं कार्यं न कुर्वन्तीत्यर्थं मेनिरे दीक्षिताः । महाभाष्ये इयं परिभाषा न क्वापि दृष्टा इति अस्याः स्थितौ दृढतरप्रमाणं किमपि नास्तीति मन्यते नागेशभट्टः । प्राचीनानां मते यानि प्रयोजनानि सिद्धानि तानि प्रकारान्तरेण साधयति नागेशः । एतदत्र यथाशक्ति यथाग्रन्थं विवरीतुं यत्नः क्रियते ।

परिभाषेन्दुशेखरे इयं परिभाषैवमवतारिता । नन्वेवं सेदुष इत्यादौ अन्तरङ्गत्वादिटि ततः सम्प्रसारणेऽपि इटः श्रवणाऽऽपत्तिः इति । तथा हि – "असिद्धं बहिरङ्गमन्तरङ्गे" इति परिभाषायां हि पूर्वोपस्थितनिमित्तकस्य अन्तरङ्गत्वमुपपादितम् । षद्लृ विशरणगत्यवसादनेषु इति धातुः पठ्यते । अस्य "धात्वादेः षः सः" इति सत्वे अनुबन्धलोपे च भाषायां सदवसश्रुवः इत्यनेन भूतसामान्ये लिङ्लकारे तस्य च स्थाने अनेनैव सूत्रेण क्वस्वादेशे अनुबन्धलोपे सद् वस् इति जाते "लिटि धातोरनभ्यासस्य" इति द्वित्वे सद् सद् वस् इति जाते हलादिशेषे अत एकहल्मध्येऽनादेशादेर्लिटि इत्यनेन एत्वाभ्यासलोपे सेद् वस् इति जाते वस् इत्यस्य "नेड्वशि कृति" इत्यनेन इण्णिषेधे क्रादिनियमेन इडागमे प्राप्ते तस्य "वस्वेकाजाद्धसाम्" इत्यनेन कृतद्विर्वचनानामादन्तानां घसेश्च वसोः इट् स्यात् इत्यर्थकेन नियते सति सेद् इवस् इति जाते वसोः कृत्त्वेन "कृत्तद्धितसमासाश्च" इति सूत्रेण प्रातिपदिकसंज्ञायां सुबादिकार्येषु सेदिवानिति रूपम् ।

अस्मादेव प्रातिपदिकात् द्वितीयाबहुवचनविवक्षायां शसि सेद् इवस् शस् इति जाते शकारस्य इत्त्वाल्लोपे "वसोःसम्प्रसारण"मित्यनेन वकारस्य स्थाने उकारे सम्प्रसारणाच्चेति पूर्वरूपे सेदुस् इति जाते शासिवसिघसीनाञ्च इति सूत्रेण षत्वे, रुत्वविसर्गयोः सेदुष इति रूपम् । अत्र इयं चिन्ता यत् सेद् वस् अस् इत्यवस्थायां वसोरिडागमः कृतः, स कथं भवतीति । यतो हि वसोः आर्धधातुकत्वं, कृत्त्वमपेक्ष्यते। अत्रायं क्वसुः लिटः स्थाने विधीयते । अस्य च साक्षाद्धातोर्विहितत्वाभावेन आर्धधातुकत्वमपि न प्राप्नोति। लकारस्थाने अयं विधीयत इति, लकारश्च प्रायः तिङ्भवतीति सार्वधातुकसंज्ञा एव प्राप्नोति । तिङ्भिन्नत्वं नास्तीति कृत्त्वमपि न प्राप्नोति इति । तिङ्भावि तिङ् इत्यर्थस्य विकरणेभ्यो नियमो बलीयान् इत्यनेन ध्वनितत्वेन, प्रकृते लिटः तिङ्भावित्वाभावेन कृत्त्वं सिध्यत्येव । तथा चेदमवतरणं सुस्थमेव भवति ।

इटः श्रवणापत्तिरित्यस्य तत्स्थानिकयणः अपि श्रवणा पत्तिर्बोध्या । दीक्षितानां मते अयं दोषः वारयितुं शक्यत एव । निमित्तं विनाशोन्मुखं दृष्ट्वा तत्प्रयुक्तं कार्यं न कुर्वन्तीत्यर्थं ते मन्यन्ते । तथा च भाविना सम्प्रसारणेन वलादित्वं नङ्क्ष्यतीति तन्निमित्तं कार्यमिडागमरूपं कार्यं न क्रियत इति ।

परिभाषाया अर्थस्तु दीक्षितादिभिरेवं साधितः । न कृतः विशिष्ट ऊहो निश्चयः शास्त्रप्रवृत्तिविषयो यैः ते । भाविनि निमित्तविनाशे इत्यध्याह्रियते । तथा च बहिरङ्गेण अन्तरङ्गस्य निमित्तविनाशे पश्चात्सम्भाविते पूर्वमन्तरङ्गं न प्रवर्तते । भाविनि निमित्तविनाशे इत्यस्य अध्याहरस्तु कर्तव्य एव । अन्यथा पाणिनीयाः शास्त्रप्रवृत्तिविषयकनिश्चयाभाववन्त इत्यर्थस्य अङ्गीकर्तव्यत्वेन सकलशास्त्र-वैयर्थ्यप्रसङ्गः ।

अस्याः परिभाषायाः ज्ञापकं "समर्थानां प्रथमाद्वा" इति सूत्रे समर्थानामिति । तद्धि समर्थग्रहणं सूत्थितादिभ्यः कृतदीर्घेभ्यः प्रत्ययोत्पत्त्यर्थम् । अत्र अन्तरङ्गत्वात् दीर्घे कृत एव प्रत्ययप्राप्त्या, कृते च तस्मिन् सौत्थितिरिति इष्टं रूपं सिध्यति । समर्थग्रहणाभावेऽपि इष्टे सिद्धे तद्व्यर्थं सत् इमां परिभाषां ज्ञापयति । ज्ञापितायान्त्वस्यां बहिरङ्गेण आदिवृद्धिरूपेण कार्येण अन्तरङ्गस्य दीर्घस्य बाधदर्शनेन पूर्वं दीर्घः न प्रवर्तेत, ततश्च कदाचित् सु उत्थित इत्यस्मादपि प्रत्यय उत्पद्येत । तद्वारणार्थं समर्थग्रहणम् ।

न च सौत्थितौ बहिरङ्गतया वृद्धेरसिद्धत्वात् न तन्निमित्तविनाश इति वाच्यम् । समर्थग्रहणेन एतद्विषये तस्या अप्रवृत्तिज्ञापनात् । समर्थग्रहणेन अन्तरङ्गपरिभाषाया अनित्यत्वमेवज्ञाप्यत इत्यपि वक्तुं न शक्यते। यतो हि तया परिभाषया समकालप्राप्तबहिरङ्गस्य पूर्वं जातबहिरङ्गस्य च अन्तरङ्गे कर्तव्ये असिद्धत्वं बोध्यते । अन्तरङ्गे जाते तस्य असिद्धत्वं न बोध्यते ।

यदीयं परिभाषा वर्तते तर्हि "अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते" इत्यादीनामावश्यकता का इति प्रश्न उदेति, तस्य समाधानमाह दीक्षिताद्यनुरोधेन, अन्तरङ्गानपि विधीनित्यादेरप्यस्यामेवान्तर्भाव इति । एवञ्च तासां परिभाषाणां पृथक्परिभाषात्वेन गणनावश्यकता नास्तीति लाघवमपि ।

कैयटः अपि समर्थग्रहणेन एव इयं परिभाषा ज्ञाप्यत इत्येव मनुते । किन्तु अस्या अर्थविषये भिन्नमेव पन्थानमाश्रितवान् । न कृत ऊहो विशिष्टः तर्को निमित्तकारणविनाशेऽपि कार्यस्थितिरूपो यैः इति । तथा च पपुष इत्यादौ अन्तरङ्गत्वादादौ कृतोऽपीडागमो इडागमनिमित्तविनाशे सति स्वयमेव निवर्तते इति। निमित्तापाये नैमित्तिकस्याप्यपाय इति यावत् । भाविनिकाले निमित्तं विनश्यतीति पूर्वमेवाप्रवृत्तौ न कश्चिन्न्यायः, नापि दृष्टान्तः इति कैयटस्य आशय उपवर्णितः नागेशेन । समर्थग्रहणेन इयं ज्ञाप्यत इति कृत्वा अपूर्वोऽर्थःज्ञाप्यत इति न । लोकसिद्ध एव अर्थः अनेन ज्ञाप्यत इति भावः ।

किन्तु नागेशभट्टस्तु "परे तु सेदुष इत्यादौ पदावधिकान्वाख्याने सेद्वस् अस् इति स्थिते इट् सम्प्रसारणयोः प्राप्तयोः प्रतिपदविधित्वात्पूर्वं सम्प्रसारणे वलादित्वाभावादिटः प्राप्तिरेव नेति तत्सिद्धिरिति समर्थानामिति सूत्रे कैयटः" इत्याह । यद्यपि प्रतिपदविधित्वमनवकाशत्व एव पूर्वप्रवृत्तौ नियामकमिति अन्यत्र दृष्टम् , सावकाशत्वेपि पूर्वप्रवृत्तौ नियामकं भवत्येव । ननु सेदुष इत्यत्र इट्सम्प्रसारणयोरुभयोरपि प्रतिपदोक्तत्वमेवास्ति कतरस्यादौ प्रवृत्तिरिति चेत् सम्प्रसारणमेव । प्रतिपदोक्तत्वस्य उभयत्र समानेऽपि

सम्प्रसारणस्य नित्यत्वस्यापि सत्त्वात् । विषुण इत्यादौ अकृतसन्धेः कदाचित्प्रत्ययदर्शनेन सर्वत्र तथाभ्रमवारणाय तु समर्थग्रहणमिति ।

दीक्षितानां मते इयमङ्गीक्रियत इति तेषामन्तरङ्गानपीत्यादिपरिभाषाणां पञ्चकस्य पृथक्कथनावश्यकता नास्ति । अस्यामेवान्तर्भावात् । नागेशमते इयं नास्तीति तत्कथनाऽऽवश्यकता वर्वर्त्त्यैव । भाष्यकारैश्च इयमस्तीति कण्ठरवेण तु न क्वाप्युक्तम् ।

# पुगन्तलघूपधस्य च

**विद्वान् प्रशान्त शर्मा, कुरुक्षेत्रम्**

प्रचोदयेद्धियोऽस्माकं तिष्ठन्नो हृदि सर्वदा ।
अन्तर्यामी महादेवः सर्वविद्याविधायकः ॥ १ ॥

महाभाष्यं समाधृत्य किञ्चिद्वक्तुमुपक्रमे ।
विपश्चितां कृते नैव किन्तु स्वज्ञानवृद्धये ॥ २ ॥

पुगन्तेत्यादिकं सूत्रं विदधाति गुणन्त्वदः ।
अष्टके विद्यते पादे सप्तमस्य तृतीयके ॥ ३ ॥

अंगस्य च पुगन्तस्य प्रत्यये सार्वधातुके ।
एवं लघूपधस्यापि गुणः स्यादार्धधातुके ॥ ४ ॥

निदर्शनं पुगन्तस्य ब्लेपयतीति वर्तते ।
भेदनं छेदनं भेत्ता छेत्ता लघूपधस्य च ॥ ५ ॥

प्रश्नस्समुदितस्तत्र भेत्तेत्यत्र गुणः कथम् ?
यावता सूत्रकारेण संयोगे सूत्रितं गुरुः ॥ ६ ॥

आनन्तर्यं हलोरत्र अङ्गप्रत्यययोर्ननु ।
एकसंज्ञाधिकारेण लघुसंज्ञापि बाध्यते ॥ ७ ॥

तदेतदसमीचीनमवधानच्युतं वचः ।
भेदनमिति दृष्टान्ते सत्यपि भेत्तेत्युदाहृतम् ॥ ८ ॥

विषयेऽस्मिन् महाभाष्ये शङ्कते भगवान् ऋषिः।
आह कात्यायनस्तत्र सहजं श्लोकवार्त्तिकम् ॥ ९ ॥

पूर्वोत्तरावुभौ पक्षौ वर्त्तेते तत्र वार्त्तिके ।
समाधानं च तत्रैव वच्मि शब्दविदां पुरः ॥ १० ॥

प्रायेण सर्वेऽपि वदन्ति सन्तः कष्टं किल व्याकरणं जनानाम् ।
किन्त्वत्र भाव्यं तु न कष्टजुष्टं किं कारणं तत्र ? ऋषिः प्रवक्ता ॥ ११ ॥

तथा हि –

संयोगेगुरुसंज्ञायां गुणो भेत्तुर्न सिध्यति । भिद् तृच् भिद् त् इत्यस्यामवस्थायां धात्वन्तप्रत्ययाद्योर्हलोरानन्तर्ये सति गुणो भेत्तुर्भेशब्दस्य न सिध्यति । परिहरति – विध्यपेक्षं

लघोश्चासाविति । इदं विधानं विध्यपेक्षं वर्त्तते इति कृत्वा नात्र दोषो भवति । लघूपधाद् यः प्रत्ययो विहित इति । ननु अत्र सूत्रे पञ्चम्यभावात् कथं विधानमुपपद्यते ? उच्यते, षष्ठीपक्षेपि विशेष्यत इति चेत् को दोषः – लघूपधस्य ये सार्वधातुकार्धधातुके । के च ते ? ये तस्माद् विहिते इत्युपपद्यते । लघोश्चासौ इति पाठे तु लघूपधाच्चासौ तृज्विहित इत्यर्थः । उपधाशब्दस्तु वृत्तभङ्गभयान्न प्रयुक्तः ।

"कथं कुण्डिर्न दुष्यति" इति अङ्गाधिकारे नुमो विधानादकृत एव नुमि प्रत्ययो लघूपधाद्विहितः, तत्र परतो निमित्ते स्थिते कुण्डिता इत्यादौ गुणः प्राप्नोति, यदि विधानं विशेष्यत इत्यर्थः । परिहरति – धातोर्नुम इति । हेतावियं पञ्चमी, यस्मात् तत्र धातोर्नुमङ्गस्य तस्मादित्यर्थः । उक्तं हि तत्र भाष्ये धातुग्रहणस्य प्रयोजनम् "धातुग्रहणसामर्थ्याद्वा तदुपदेशे नुम्विधानम्" इति धातूपदेशावस्थायामेव नुम् भवति । ततश्च प्रागेव नुम् पश्चात् प्रत्ययः । न चासौ लघूपधाद्विहितो भवति । "कथं रञ्जेः" इति यदि षष्ठीनिर्दिष्टेऽपिविधानं विशेष्यते तदा तु अन्यत्रापि प्रसङ्गः ततश्च अत उपधायाः इत्यकारोपधाद्विहिते प्रत्यये विधीयमाना वृद्धिः रञ्जेर्न स्यात् । प्राक् प्रत्यययोत्पत्तेर्नकारोपधत्वात् । राग इति, अत्र च "घञि" च भावकरणयोरिति नकारलोपः । ननु च चोपधाया अकारस्य वृद्धिरुच्यते न च ततः प्रत्ययविधिसंभवः इति नात्र विध्यपेक्षत्वमाश्रयिष्यते । एवं चेत् अकारोपधाद्यो विधीयते सोऽवयवादप्यनुमानाद्विहितो भवति। "स्यन्दिश्रन्थ्योर्निपातनात् इति । यदयम् "स्यदो जवे" अवोदैधौद्मप्रश्रथहिमश्रथाः" इत्येताभ्याम् द्वाभ्याम् सूत्राभ्याम् स्यन्दि श्रन्थ्योर्वृद्ध्यभावं निपातयति, तज्ज्ञापयत्याचार्यः भवत्येवञ्जातीयकानां ( रञ्जप्रकारणाम् ) वृद्धिरिति । तत्र हि वृद्ध्यभावार्थं नलोपार्थञ्च निपातनमाश्रयणीयम् । यदि च वृद्धिविषयेऽपि विधानं विशेष्यते तदा तु वृद्धिप्रसङ्गाभावादेव निपातनाश्रयणम् अनर्थकं स्यात् । नलोपसिद्धये विधिरेव आश्रयणीयः । अनेकप्रयोजनसिद्धये हि निपातनाश्रयणं भवति । "अनङ्लोपशिदीर्घत्वे विध्यपेक्षे न सिध्यतः" । अनङो लोपः अनङ्लोपः, शौ दीर्घत्वं शिदीर्घत्वं, तयोर्द्वन्द्वः अनङ्लोपशिदीर्घत्वे इति । विध्यपेक्षे न सिध्यतः यदि च षष्ठीनिर्दिष्टेऽपि विधानं विशेष्यते तदा अनङः अकारस्य लोपो न स्यात् अस्थ्ना दध्ना इत्यादिषु । राज्ञा इत्यादिषु एव "अल्लोपोऽनः" इति सूत्रं प्रवर्तेत न तु "दध्ना" इत्यादिषु प्रत्ययविधानकाले "दधि" इत्यादीनामिकारान्तत्वात् । किञ्च "सर्वनामस्थाने चासंबुद्धौ" इत्यनेन विधीयमानं दीर्घत्वं "सामानि" इत्यादिष्वेव स्यात् न तु "कुण्डानि" इत्यादिषु । प्रत्ययविधानकाले कुण्डादिशब्दानामकारान्तत्वात् । एवं विहितविशेषणाश्रयणे तु दोष एव ।

एवं तर्हि "अभ्यस्तस्य यदाहाचि लङर्थं तत् कृतं भवेत्" "नाभ्यस्तस्याचि पिति सार्वधातुके" इत्यत्र सूत्रे अज्ग्रहणं करोति तज्ज्ञापयत्याचार्यः भवति अत्र गुण इति । कथं कृत्वा ज्ञापकम् ? तस्य हि प्रयोजनम् – नेनेक्ति इत्यादौ हलादौ गुणप्रतिषेधो मा भूदिति । यदि च हलादौ अलघूपधत्वात् गुणो न स्याच्चेत् तर्हि तन्निवारणायाज्ग्रहणं कथङ्कारं कुर्यात् ? पश्यति त्वाचार्यः भवत्यत्र गुण इति । नैतदस्ति ज्ञापकम् । लङर्थं तत् भवेत् यत्र हलादिर्लुप्यते । अनेनेक् इत्यत्र प्रयोगे । तस्मान्नेदं ज्ञापकम् । प्रत्ययलोपे संयोगाभावेन गुरुत्वाभाल्लघूपधा तत्र वर्त्तत एव इति ।

तदा तु क्रुसनोर्यत्कृतं कृत्वं ज्ञापकं स्याल्लघोर्गुणे । "त्रसिगृधिधृषिक्षिपेःक्नुः" इत्यत्र क्नोः कित्करणस्यैतत् प्रयोजनं गृध्नुरित्यादौ गुणो मा भूदिति । यदि चैवंविधे विषये गुरूपधत्वात् गुणो न स्यात् तर्हि क्नोः कित्करणं व्यर्थमेव स्यात् । किञ्च "हलन्ताच्च" इत्यनेनापि सनः कित्वं विहितम् तदपि बिभित्सतीत्यादौ गुणप्रतिषेधार्थम् । तदपि ज्ञापकमुक्तार्थस्य ।

ननु च सनः कित्वं सिसृक्षतीत्यत्रामागमो मा भूत् इत्येतदर्थं स्यात् । इदमपि नास्ति । यद्येतावत् प्रयोजनम् स्यात् तर्हि सृजिदशोर्झल्यमकित्सनोः" इत्येव सूत्रन्यासं कुर्यात् । तस्मात् सनः कित्वमपि ज्ञापकमेव ।

एवं च कृत्वा "भेत्ता" इत्यत्र गुणः सिद्धो भवति । अपरञ्च उपधा चात्र इगेव गृह्यते तेन च भिनत्तीत्यत्र गुणो न भवति । अथवा –

पुकि अन्तः पुगन्तः लघ्वी उपधा लघूपधा पुनः समाहारो द्वन्द्वः पुगन्तलघूपधम् एवं व्याख्याने सत्यपि भिनत्तीत्यत्र गुणो न भवति अस्मिन् व्याख्यानेऽपि "इक्" इति उपतिष्ठत एव । तथा हि – भिनत्तीत्यत्र यासौ उपधा नासौ इक् यश्च इक् नासौ उपधा इति । एवं दोषो न भवति । वार्तिकसंग्रहस्तु –

संयोगे गुरुसंज्ञायां गुणो भेत्तुर्न सिध्यति ।
विध्यपेक्षं लघोश्चासौ कथं कुण्डिर्न दुष्यति ॥ १ ॥

धातोर्नुमः कथं रञ्जेः स्यन्दिश्रन्थ्योर्निपातनात् ।
अनङ्लोपशिदीर्घत्वे विध्यपेक्षे न सिध्यतः ॥ २ ॥

अभ्यस्तस्य यदाहाचि लङर्थं तत् कृतं भवेत् ।
क्नुसनोर्यत् कृतं कित्वं ज्ञापकं स्याल्लघोर्गुणे ॥ ३ ॥ इति ।

# अकथितञ्च ( १.४.५१ )

**विद्वान् एम्. विनायक उडुपः, शृङ्गगिरिः**

कर्मसंज्ञा विधायकं सूत्रमिदम् । कर्तुरीप्सिततमं कर्म इत्यतः कर्मपदमनुवर्तते । अकथितशब्दः असंकीर्तितार्थको यौगिकः । अप्रधानार्थको रूढस्तु न गृह्यते । "केनाकथितम् ? अपादानादि-विशेषकथाभिः" इति भाष्यकृत्कृतप्रश्नप्रतिवचनाभ्यां यौगिकस्यैव ग्रहणमिति लाभात् । यतः गच्छतीत्यर्थे गौरिति व्युत्पादनेऽपि गच्छतीत्युक्ते केन ? इति प्रश्नः भवति, न तु गौरिति रूढशब्दोच्चारणे। रूढस्य ग्रहणे कर्तृभिन्नकारकाणाम् अप्रधानत्वेन दुहादियोगे अपादानत्वविवक्षायामपि कर्मसंज्ञस्यादिति गोः पयो दोग्धीति रूपासिद्धिः स्यात् । "कारक" इत्यधिक्रियत इति अपादानादिविशेषैरविवक्षितं कारकं कर्मसज्ञं भवतीत्यर्थः । "गां दोग्धि पयः" इत्यादीन्युदाहरणानि । पयोनिष्ठविभागानुकूलव्यापारः दुह्धात्वर्थः । विभागाश्रयत्वात् पयसः कर्मत्वम् । विभागावधित्वेन गोरपादानत्वं प्राप्तम् । तदविवक्षायामनेन कर्मत्वम् । अपादानादिविशेषैरविवक्षा च प्रसक्तिपूर्विका अविवक्षा, तेषां सर्वथा अप्रसक्तिर्वा । अत एव अपादानत्वादीनामप्रसक्तावपि "बलिं याचते वसुधाम्" इत्यादौ बलेरनेन कर्मत्वम्।

नन्वेवं नटस्य श्रृणोति इत्यादावपि नटस्यानेन कर्मत्वं स्यात् । न च तस्य कारकत्वाभावः । गीतद्वारा क्रियाजनकत्वसत्वात् । न चान्यथासिद्धत्वम् । ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीत्यादौ यथा ब्राह्मणं विनापि पुत्रेण पृच्छिक्रियानिर्वृत्तिः, तथा नटं विना श्रवणक्रियानिर्वृत्तेरसम्भवात् । व्यापेरेण व्यापारिणोऽन्यथा-सिद्ध्यभावात् इति चेन्न । दुहादिपरिगणनेनादोषात् । तथा हि भाष्ये –

> दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ ।
> ब्रुविशासिगुणेन च यत्सचते तदकीर्तितमाचरितं कविना ॥

इति परिगणितम् । उपयुज्यत इत्युपयोगः – प्रधानं कर्म तस्य निमित्तं – तत्संबधीत्यर्थः । तथा च – कर्मसंज्ञापेक्षया पूर्वविधीनाम् – अपादानसम्प्रदानकरणाधिकरणानां विधिविषयाभावे दुहादीनां ब्रुविशास्योश्च प्रधानकर्मणा यत् संबध्यते तत् कविना – मेधाविना अकीर्तितम् इति आचरितं – व्यवहृतमिति अस्यार्थः । अत्र यद्यपि करणस्य पूर्वत्वं वर्तत इति तदविवक्षायामप्यनेन कर्मसंज्ञा इत्यर्थः प्रतीयते, तथापि "गां पयो दोग्धि हस्तेन" इत्यादौ करणस्य हस्तादेः प्रधानकर्मसम्बद्धत्वासंभवात् तस्य पूर्वशब्देनाग्रहणम् ।

सति सम्भवे धात्वर्थव्यापारात् प्राक् प्रधानकर्मसम्बद्धत्वमेव गृह्यते । तेन "गां पयो दोग्धि स्थाल्याम्" इत्यादौ धात्वर्थव्यापारानन्तरं तत्सम्बद्धायाः स्थाल्याः तद्गताधिकरणत्वाविवक्षायां नानेन कर्मत्वम् । "बलिं याचते वसुधाम्" इत्यत्र स्वामिस्वत्वनिवृत्तिपूर्वकं स्वस्वत्वोत्पत्यनुकूलव्यापारः याचृधात्वर्थः । उत्पत्याश्रयत्वात् वसुधायाः कर्मत्वम् । स्वस्वामिभावसम्बन्धेन तत्संबद्धत्वं बलेः ।

तत्रापादानत्वादीनां सर्वथाऽप्रसक्तेरनेन कर्मसंज्ञा । "व्रजमवरुणद्धि गाम्" इत्यत्र निर्गमनप्रतिबन्धपूर्वकं चिरस्थित्यनुकूलो व्यापारः धात्वर्थः । स्थित्याश्रयत्वात् गोः कर्मत्वम् । संयोगेन तत्सम्बद्धत्वं व्रजस्य । तस्य कर्मद्वारा क्रियाधारत्वेन अधिकरणत्वं प्राप्तम् । तदविवक्षायामनेन कर्मत्वम् । "माणवकं पन्थानं पृच्छति" इत्यत्र जिज्ञासितार्थविषयकज्ञानाकूलव्यापारः धात्वर्थः । विषयतया ज्ञानाश्रयत्वात् पथः कर्मत्वम् । तज्ज्ञानाश्रयत्वेन माणवकस्य कर्मसम्बद्धत्वम् । पूर्वविधेरप्रसक्तेरनेन कर्मत्वम् । भिक्षिर्याचिना व्याख्यातः। "वृक्षमवचिनोति फलानि" इत्यत्र विभागपूर्वकमादानं धात्वर्थः । विभागाश्रयत्वात् फलस्य कर्मत्वम् । संयोगेन तत्सम्बद्धत्वं वृक्षस्येति तद्गतापादानत्वाविवक्षायामनेन कर्मत्वम् । "माणवकं धर्मं ब्रूते शास्ति वा" इत्यत्र ज्ञानानुकूलः शब्दप्रयोगादिरूपो व्यापारः ब्रूञर्थः, नियतप्रवृत्तिजनकज्ञानानुकूलः शब्दप्रयोगादिरूपो व्यापारः शासेरर्थः । उभयत्र विषयतया ज्ञानाश्रयस्य धर्मस्य कर्मत्वम् अत्र तु धात्वर्थव्यापारानन्तरं तज्ज्ञानाश्रयत्वसम्बन्धेन धर्मसम्बद्धत्वम् माणवकस्य । पूर्वं तत्संबद्धत्वस्यासंभवात्। अत एवानयोः श्लोके पृथगुपादानम् , निमित्तशब्दानुपादानञ्च । निमित्तस्य पूर्वभावित्वावश्यकत्वात् ।

अत्र भट्टोजिदीक्षिताः –

गौः पयस्त्यजति, गवापयस्त्याजयति इति प्रतीतेः "गां दोग्धि पयः" इत्यादौ पयोनिष्ठविभागानुकूलव्यापारानुकूलव्यापारः धात्वर्थः । तत्र द्वितीयव्यापारजन्यं फलं प्रथमव्यापार इति तदाश्रयस्य गोः कर्तुरीप्सिततमं कर्म इत्यनेनैव कर्मसंज्ञा सिद्धा । न च व्यापारद्वयार्थकत्वे कर्तृनिष्ठव्यापारजन्यफलाश्रयत्वाभावात् पयसः कर्मत्वं न स्यादिति शङ्क्यम् । "चैत्रं ग्रामं गमयति" इत्यादौ ग्रामस्य कर्मत्वसम्पादनाय जन्याजन्यसाधारण प्रयोज्यत्वनिवेशस्यावश्यकत्वेन कर्तृनिष्ठव्यापारप्रयोज्यफलाश्रयत्वस्य पयसि सुस्थिरत्वात् । किञ्च प्रथमव्यापाराश्रयस्य कर्तुरीप्सिततममिति कर्मसंज्ञा सिध्यति चेदेव गत्यादिसूत्रस्य नियामकत्वोपपत्तिः । अत एव "अपादानमुत्तराणि" इत्यस्य गां दोग्धि पयः इत्युदाहृतं भाष्ये । तत्र हि अवधित्वफलाश्रयत्वयोर्युगपद्विवक्षायां संज्ञाद्वयस्य प्राप्तिः । कर्मसंज्ञायाः प्राप्तिस्तु कर्तुरीप्सिततममित्यनेनैव । अवधित्वविवक्षायामकथितसूत्रस्य अप्रसक्तेः । यदि तु गोरीप्सिततमत्वं नास्ति पयस एव तत्वमित्युच्यते, तथापि तथायुक्तञ्चानीप्सितमित्यनेन कर्मसंज्ञा सिद्धैव। तर्हीदं सूत्रं किमर्थमिति चेत् कर्मणः शेषत्वेन विवक्षायां षष्ठी प्राप्ता तां बाधितुम् । तथा च गां दोग्धिपयः इत्यादौ गवादीनां क्रियान्वये न कदापि षष्ठी भवति । किञ्चास्य षष्ठ्यपवादत्वात् एतन्निमित्तकद्वितीयाया अपि सम्बन्धमात्रमर्थः । पयःकर्मकं गोसम्बन्धि दोहनमिति बोधः ।

यद्यपि भाष्ये दुहादौ अष्टौ धातवः दृश्यन्ते । तथापि तत्र चकारेण पच्–दण्ड्–मथ्–मुष्–जि–नी–हृ–कृष्–वह्, एतेऽपि धातवः सङ्गृह्यन्ते । अन्यथा "तण्डुलान् ओदनं पचति, गर्गान् शतं दण्डयति, ग्राममजां नयति" इत्यादावपि तण्डुलगर्गग्रामादीनां कर्मणां शेषत्वेन विवक्षायां क्रियान्वये षष्ठीप्रसंगात् । "तण्डुलानामोदनं पचति" इत्यादिप्रयोगास्तु षष्ठ्यन्तार्थस्य ओदने अन्वये एव भवन्ति । अत एव भाष्ये द्व्यर्थश्चैव पचिर्विकारयोगे षष्ठी इत्येव उक्तम् । एषां परिगणने प्रवेशे मानन्तु "गर्गाः शतं दण्ड्यन्ता"मिति भाष्यप्रयोग एव । "समुदाये वाक्यपरिसमाप्तिः" इति न्यायस्य दृष्टान्ततया इदं स्थलं प्रदर्शितं भाष्ये ।

तत्र गुणकर्मणि लकारो दृश्यते । शतस्य तु उद्देश्यत्वेन प्राधान्यमेव । "अर्थिनश्च राजानो हिरण्येन भवन्ति" इति वाक्यशेषात् तस्य तत्वं लभ्यते । अत एव अप्रधानगर्गानुरोधात् "न शतस्य प्रधानस्यावृत्तिरिति "समुदाये वाक्यपरिसमाप्तिः" इत्यस्य अयं दृष्टान्तः सङ्गच्छते । तत्र अप्रधाने दुहादीनामित्युक्तेर्दण्डधातो-र्दुहाद्यन्तर्भावं विना न गुणकर्मणि लकारसिद्धिरिति । एवं हि –

येनापविद्धसलिलस्फुटनागसद्मा देवासुरैरमृतमम्बुनिधिर्ममन्थे । इति भारविप्रयोगोऽपि सङ्गच्छते । तत्र अमृतस्योद्देश्यत्वात् प्राधान्यम् । अम्बुनिधिस्तु गौणः अनुद्देश्यत्वात् ।

किञ्चार्थनिबन्धनेयं संज्ञा । "अतएव शकारमसि चोदित", "अहमपीदमचोद्यं चोद्ये" इत्यादि भाष्यप्रयोगाः सङ्गच्छन्ते । तत्र हि पृच्छधातुसमानार्थकस्य चुदेः द्विकर्मकता गौणे कर्मणि लकारादिः दृश्यते । अत एव

१. उदारचेता गिरमित्युदारां द्वैपायनेनाभिदधे नरेन्द्रः ॥
२. शिलोच्चयोऽपि क्षितिपालमुच्चैः प्रीत्या तमेवार्थमभाषतेव ॥
३. स्थास्नुं रणे स्मेरमुखो जगाद मारीचमुच्चैर्वचनं महार्थम् ॥

इत्यादि शिष्टप्रयोगाः सङ्गच्छन्ते इत्यभिप्रयन्ति ।

अत्र नागेशभट्टानामाशयस्तु –

निष्क्रियाणामपि गवादीनां गोदोहनादौ विनियोगो दृश्यते । अतः दुहादीनां पयोनिष्ठविभागानुकूल-व्यापारः इत्येवं रीत्या एकव्यापारार्थकत्वमपि । तदानीं गवादीनां फलतावच्छेदकसम्बन्धेन फलाश्रयत्वाभावेन पूर्वसूत्राभ्यां कर्मसंज्ञायाः अप्राप्तत्वेन इदं सूत्रमावश्यकम् । व्यापारद्वयार्थकत्वे तु पूर्वसूत्रेणैव सिद्धा । षष्ठ्यपवादत्वमात्रेण द्वितीयाया सम्बन्धार्थकत्वमयुक्तम् । कर्तुरीप्सिततममित्यस्य अभावे तद्विषयेऽपि षष्ठ्याः प्राप्तेः सत्वात् । किञ्च "सप्तमीपञ्चम्यौ कारकमध्ये" इति सूत्रे कारकशब्दस्य शक्तिपरत्वनिर्णयात् , दण्डगतशक्तेः घटकारणत्वेऽपि "दण्डः घटकारणम्" इत्यादिप्रयोगेण शक्तिशक्तिमतोरभेदोपचारस्वीकारात् , "कर्मणिद्वितीया" इति सूत्रस्वरसात् कर्मत्वशक्तिमान् द्वितीयार्थः। एवं हि द्वितीयाया एकार्थकत्वं सिध्यति । तथा च यत्र यत्र "कर्मणि द्वितीया" इति सूत्रेण द्वितीया विहिता तत्र सर्वत्र कर्मत्वशक्तिमत्वेनैव बोध इति गोकर्मकं पयःकर्मकं दोहनमित्येव बोधः । एतेन व्यापारद्वयार्थकत्वेऽपि सम्बन्धविधया बोधसम्पादनायेदं सूत्रमिति परास्तम् ।

अपि च "गर्गाः शतं दण्ड्यन्ताम्" इत्यत्र दण्डधातोः व्यापारद्वयार्थकत्वम् । अतः तत्र प्रधानकर्मण्येव लकारः "प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्" इत्युक्तेः । न च शतस्यैव तत्र प्राधान्यम् । आर्थिकप्राधान्यस्य तत्र सत्वेऽपि, कर्तृप्रत्ययसमभिव्याहारे कर्तृनिष्ठप्रधानव्यापारविशेषणफलाश्रयत्वरूप-लकारप्रयोजकशाब्दप्राधान्यस्य गर्गेषु सत्वात् । गत्यर्थेषु अकर्मकेषु च ण्यन्तधातुषु "ध्रुवचेष्टितयुक्तिषु-चाप्यगुणे" इति वार्तिकेन प्रधानकर्मणि लकारविधानेन तत्र ईदृशप्राधान्यस्यावश्यकत्वात् । एवं व्यापारद्वयार्थकधातूनां सर्वेषामपि द्विकर्मकत्वेन प्रधानकर्मण्येव लकारः । प्रधानकर्मत्वं च पूर्वोक्तमेव इति व्यापारद्वयार्थकत्वेऽपि "गौर्दुह्यते पयः" इत्यादीन्येव रूपाणि ।

एकव्यापारार्थकत्वे तु गवादीनाम् "अकथितञ्च" इत्यनेन कर्मसंज्ञा । तेषु गुणकर्मसु लकारः "गौणे कर्मणि दुह्यादेः" इत्युक्तेः । गुणकर्मत्वञ्च निरूक्तप्रधानकर्मभिन्नत्वम् । तच्च फलानाश्रयत्वात् गवादीनमस्त्येव । एवं च प्रमाणाभावात् भाष्यपरिगणितेषु दुहादिषु चकारेण अन्येषां प्रवेशो नोचितः । किं च गोः पयो दोग्धि, तण्डुलानामोदनं पचति इत्यादौ षष्ठ्यन्तार्थस्य क्रियायामन्वयः स्यादित्यप्यापादयितुं न शक्यते । "द्व्यर्थश्चैव पचिः, विकारयोगे षष्ठी" इत्येव भाष्यकारैरुक्तत्वात् षष्ठ्यन्तार्थकस्य स्वान्वययोग्यार्थकनामसमभिव्याहारे तत्रैवान्वयः इति व्युत्पत्तेरङ्गीकारात् । अन्यथा दुहादियोगे षष्ठ्या अनेन बाधेऽपि "वृक्षस्य पर्णं पततीत्यादौ" अपादानत्वाविवक्षायां षष्ठ्यन्तार्थस्य क्रियायाम् अन्वयस्य वृद्धानभिमतस्य दुर्वारत्वापत्तेः । शकारमसि चोदितः इत्यादीनाम् एवं पूर्वोपदर्शित प्रसिद्धकविप्रयोगाणां च धातोर्व्यापारद्वयार्थकत्व-स्वीकारेणैव उपपत्तेरर्थनिबन्धनेयं संज्ञा इत्यपि व्यर्थम् । किं चैवं "दुहियाचि" – इति परिगणने याचेः पृथग्भिक्षिग्रहणवैयर्थ्यापत्तिः इति अत्र भाष्यविरोधोऽपि इति।

# अदसो मात्

**विद्वान् इ. एन्. नारायणन्, चङ्गनाश्शेरी**

अदस् शब्दावयवमकारात्परौ ईदूतौ प्रगृह्यौ स्तः इति सूत्रार्थः । अमी ईशा इति ईदन्तस्य उदाहरणम्। अमी इत्यत्र ई इत्यस्य अनेन प्रगृह्यसंज्ञायां प्रकृति भावे सवर्णदीर्घो न भवति । रामकृष्णावमू आसाते इति ऊदन्तस्य उदाहरणम् । अमू इति पुल्लिङ्गे ऊकारस्य अनेन प्रगृह्यत्वे प्रकृतिभावे यण् न भवति ।

अत्र विचार्यते । मात् प्रगृह्यसंज्ञायां तस्यासिद्धत्वे अयावेकादेशप्रतिषेधो वक्तव्यः । अदसो मात् इति सूत्रं प्रति मुत्वमीत्वयोरसिद्धत्वम् अदे ईशाः, अदौ आसाते इत्यवस्थायां अयादेशे अवादेशे च प्राप्ते तत्प्रतिषेधो वक्तव्यः । ननु अणोऽप्रगृह्यस्यानुनासिकः इत्यत्र सूत्रारम्भस्य प्रयोजनत्वमिति सूत्रारंभ-सामर्थ्यात् अयादिप्रतिषेधः न सिध्यति चेत् , नैकं प्रयोजनं योगारम्भं प्रयोजयति । अन्यथा अणोऽप्रगृह्यस्यानुनासिकोऽदसो न इत्येवं ब्रूयात् । अतः सूत्रारम्भसामर्थ्यात् अयादिप्रतिषेधः सिध्यति । अथवा विप्रतिषेधात् परा प्रगृह्यसंज्ञा अयादीन् बाधते । कार्यकालं संज्ञापरिभाषम् इत्यनेन प्लुतप्रगृह्या अचि नित्यम् इत्यत्र उपस्थिततत्वात् प्रगृह्यस्य परत्वम् । ननु एचः अयादयः, ईत्वोत्वयोः प्रगृह्यसंज्ञा इति एकस्य द्विकार्ययोगाभावात् विप्रतिषेधो न भवति इति चेत् प्रकृतिभावः अयादीन् बाधते, अयादयः प्रगृह्यसंज्ञानिमित्तं ईत्वमूत्वं च बाधते इति असंभवे विप्रतिषेधः । अयादीनां सपादसप्ताध्यायीस्थत्वे ईत्वोत्वयोः त्रिपादीस्थत्वे पूर्वत्रासिद्धमिति ईत्वोत्वयोः असिद्धत्वात् युगपत्प्राप्त्यभावात् विप्रतिषेधो नास्ति इति चेत् आश्रयात् सिद्धत्वं यथा रोरुत्वे । प्रगृह्यसंज्ञायां कार्यित्वेन आश्रयणात् ईत्वोत्वयोः सिद्धत्वे अयादीन् प्रति सिद्धत्वात् यथोद्देशपक्षाश्रयणे ईत्वोत्वयोः परत्वम् । यथा रोः अतो रोरप्लुदादप्लुते इत्यत्र आश्रयात् सिद्धत्वम् । एवञ्च आश्रयात् सिद्धत्वे विप्रतिषेधे परयोः ईत्वोत्वयोः सिद्धत्वात् अयाद्य भावे तत्प्रतिषेधो न वक्तव्यः । अथवा प्रगृह्यसंज्ञावचनसामर्थ्यात् अयादयो न भवन्ति । अथवा अदस इति योगविभागे ईत्वोत्वयोः सिद्धत्वे प्रगृह्यसंज्ञा भवति । ननु अमुया इत्यत्र अद आ इति स्थिते अदस इति प्रगृह्यत्वे दोष इति चेत् प्रकृति भावस्य पदान्तविषयत्वात् अमुया इत्यत्र पदान्तविषयत्वाभावात् न दोषः । ननु अमुकेऽत्र इत्यत्र अदस इति प्रगृह्यत्वे पूर्वरूपं न स्यात् इति चेत् द्विवचनमित्यनुवृत्तौ तत्र प्रगृह्यत्वं न स्यात् । नन्वेवम् अमी ईशा इत्यत्र प्रगृह्यसंज्ञा न स्यात् इति चेत् एत् इति निवृत्या अमुकेऽत्र इत्यत्र प्रगृह्यसंज्ञा न भवति । एवं च योगविभागे अदसः इति ईत्वोत्वयोः सिद्धत्वे अयादयो न भवन्ति । अथवा आशयम् – अदसो मात् इति । तत्र ईत्वोत्वे न स्तः, मत्वं च न । तत एवं विज्ञास्यते मार्थादीदाद्यर्थानाम् इति । एवञ्च बुद्धिस्थसङ्कलनायामसिद्धत्वं नास्ति । एवञ्च अस्मिन् पक्षे, योगविभागं च गौरवमिति चेत् आश्रयात् सिद्धत्वे सूत्रारंभसामर्थ्यात् अयादयो न भवन्ति ।

# तपरस्तत्कालस्य (१.१.७०)

श्री बि. कृष्णराजभट्टः, शृङ्गगिरिः

तपरः, तत्कालस्येति द्विपदात्मकमिदं सूत्रम् । "अणुदित्सवर्णस्य चाप्रत्ययः" इत्यस्मात् सवर्णस्येत्यनुवर्तते । पूर्वत्र संज्ञाविधानात् संज्ञाविधायकमिदं सूत्रमिति गम्यते । तः परो यस्मात्स तात्परश्च तपरः । तस्य कालस्तत्कालः, तस्येति, सः कालो यस्य तस्येति वा तत्कालस्य । तः परो यस्मात्सः तात्परश्चोच्चार्यमाणः समकालस्य संज्ञा स्यात् इति सूत्रार्थः । पूर्वस्योदाहरणं "अतो भिस ऐस्" इति, "वृद्धिरादैच्" इति ।

ननु सकृच्छ्रुतस्य तपरपदस्यार्थद्वयकथनमयुक्तमिति चेन्न । प्रकृते सूत्रकृता तपरपदस्य तन्त्रेण निर्दिष्टत्वादावृत्यार्थद्वयबोधः । तत्र तः परो यस्मादित्यर्थे "अतो भिस ऐस्" इति सूत्रस्थतपरकरणं ज्ञापकम् । तात्परः इत्यर्थे प्रमाणं तु "सहिवहोरोदवर्णस्य" इति सूत्रे वर्णग्रहणम् । तद्धि "उदवोढाम्" "उदवोढ" इत्यादौ पूर्वं वृद्धौ कृतायामपि ओत्वार्थम् । यदि तादपिपरो न तपरस्तर्हि सहिवहोरोदस्येत्येव सिद्धे वर्णग्रहणमनर्थकं स्यात् । ननु भाष्ये अवर्णग्रहणस्य प्रत्याख्यातत्वात्कथं ज्ञापकमिति चेत् , सत्यं, तर्हि वृद्धिसूत्रस्थभाष्यमेव प्रमाणम् । तत्र भाष्ये वृद्धिरादैजित्यत्र तपरकरणमाकारस्य नावश्यकमित्युक्त्वा तर्हि खट्वा इन्द्रः – खट्वेन्द्रः, खट्वा एलकः – खट्वैलकः इत्यादौ त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा आदेशा मा भूवन्निति तपरकरणम् । क्रियमाणे तस्मिन् तपरस्तत्कालस्येति नियमात् त्रिमात्रादीनां न प्रसक्तिरित्युक्तम् । तत्र "ननु तः परो यस्मात्सोयः तपरः" इति शङ्कायां "तादपि परस्तपरः" इति समाहितम् । तथा च तात् परः तपरः इत्यपि विग्रहः कार्यः । तत्र च सुप्सुपेति समासः। तत्कालस्येत्यत्र तु उष्ट्रमुख इत्यादाविव "सप्तम्युपमान" – इत्युत्तरपदलोपः । यद्वा कालसहचरितवर्णस्यापि कालत्वेन ग्रहणात् सः कलो यस्येत्येव विग्रहः ।

नन्वेवमपि वृद्धिरादैजित्यादौ संज्ञा तात्परा, न तु तस्याः सवर्णाः समकालाः सन्ति । किञ्च तद्बोध्यैकारौकारादीनां तात्परत्वाभावेन प्लुतग्रहणं दुर्वारमिति चेन्न, भाष्यप्रामाण्येन तात्परशब्दबोध्यो वर्णस्तत्कालस्य ग्राहक इत्यर्थेनादोषः ।

नन्विदं सूत्रं नियामकमुत विधायकम् ? व्यक्तिपक्षे गुणानां भेदकत्वेऽण्ग्रहणानुवृत्तौ दीर्घादिभिस्सवर्णानां उदात्तादिभेदानां ग्रहणं न स्यात् । गुणाभेदकत्वे तु स्वं रूपमित्यतः स्वमित्यनुवर्त्य तपरः स्वस्यैवेति नियमेनोपपत्तौ तत्कालग्रहणवैयर्थ्यापत्तेः । अतोऽण्ग्रहणाननुवृत्या विधायकत्वमेवोचितम् । नन्वेवमस्यैकसंज्ञाधिकारबहिर्भूतत्वेनातो भिस ऐसित्यादौ अनेन तत्कालस्य अणुदित्सूत्रेण सर्वसवर्णानां च ग्रहणप्रसङ्ग इति चेन्न, अणुदित्सूत्रस्य अतपराणि चारितार्थ्येन तपरसूत्रस्य वृद्धिरादैजित्यादावनण्याकारे चारितार्थ्येनात्रोभयोः प्रसक्तौ परत्वात्तपरसूत्रप्रवृत्तिरिति न दोषः । अस्याकडारीयबहिर्भूतत्वेपि संख्याकृतव्यवहारस्य परस्परविरोधेनैव लोके दृष्टतयेह विरोधोऽस्त्येव । यथा

लोके पुत्रद्वयवन्तं पुरुषं "त्वमेकपुत्रो वा ?" इति पृष्टे "न, अहं द्विपुत्रः" इत्युत्तरयति तद्वदिहापि षण्णां संज्ञाभूतः अत् तद्भिन्नसंख्याकानां न संज्ञा भवितुमर्हति । गुणानामभेदकत्वे तु निरवकाशत्वादणुदित्सूत्रबाधः । अत्र यद्यपि वर्णस्यैव संज्ञात्वं, तथापि सौत्रत्वाद्विशिष्टाददित्यस्माद्विभक्त्युत्पत्तिः ।

वस्तुतस्तु जातिपक्षगुणाभेदकत्वपक्षयोरेव भाष्ये सिद्धान्तितत्वेन तयोस्तुल्यत्वेन तत्र तदग्राह्यतपरसूत्रग्राह्यविषयालाभादस्य नियमार्थत्वमेव न्याय्यम् । तथा च तपरस्तत्कालस्यैव संज्ञेति सूत्रार्थः ।

नन्वेवमाद्गुण इत्यादौ आकारात्तकारोच्चारणेन उपेन्द्र इत्यादौ गुणानुपपत्तिरिति न वाच्यम् , "उपसर्गादृति धातौ" इत्यत्र उस्तात्परत्वेपि पुनस्तकारोच्चारणेनास्य विभक्ति – तकारेऽप्रवृत्तिज्ञापनात् । नन्वेवमपि "ऋदोरप्" इति यवः स्तवः इत्यत्रैव स्यान्न तु लवः पवः इत्यादाविति चेन्न, तत्र च उच्चारणार्थो दकार एव वर्तते न तु तकारः । नन्वेवमपि भाष्ये त्तपरस्तत्कालस्येति दकारप्रश्लेषेण दकारोऽपि तत्कालस्यैव ग्राहक इति तित्स्वरितमिति सूत्रे निरूपितम् । तत्पक्षे दोष एवेति चेन्न, तदात्र धस्य थस्य वा जश्त्वेन निर्देशः । तत्र च तस्यासिद्धत्वात्तपरसूत्रदृष्ट्यात्र धकारस्तकारो वा वर्तत इति न दोषः । आस्मिंश्च पक्षे द् च तश्च त्तौ, त्तौ परौ यस्मात्सः – त्ताभ्यां परः इति त्तपरशब्दस्य विग्रहः ।

# उत्तरपदत्वे चापदादिविधौ प्रतिषेधः

**श्री बि.एल्. गणपतिभट्टः, शृङ्गगिरिः**

"न लुमताङ्गस्य" इति सूत्रभाष्ये इदं पठितम् । अनेन प्रत्ययलक्षणं निषिध्यते । यथा राजपुरुष इत्यादौ अन्तवर्तिनीं विभक्तिमाश्रित्य राजन् शब्दस्य नलोपो भवति तथा परमवाचौ इत्यादौ वाचादीनां कुत्वे प्राप्ते इदमारब्धम् । अपदादिविधौ इत्यत्र पर्युदासः । उत्तरशब्दः रूढ्या समासचरमावयवबोधकः । तथा च "पदादिविधिभिन्नकार्यविषये समासचरमावयवस्य पदसंज्ञायां कर्तव्यायां प्रत्ययलक्षणप्रतिषेधः" इति वार्तिकार्थः । "परमवाचौ" इत्यादिषु कुत्वादीनां पदादिविधिभिन्नत्वेन तस्मिन् कर्तव्ये प्रत्ययलक्षण-निषेधात् पदत्वाभावेन इष्टसिद्धिः । "दधिसेचौ" इत्यादौ तु "सात्पदाद्योः" इति षत्वनिषेधस्य पदादि-विधित्वेन तत्र प्रत्ययलक्षणं भवत्येव । पदादिविधिश्चात्र प्रतिपदोक्तः "सात्पदाद्योः" इति विधिरेव गृह्यते। तेन "परमबुधौ" इत्यादौ भष्भावो न ।

नन्वेवं माषकुम्भवापेन इत्यत्र "प्रातिपदिकान्त–" इति प्राप्तस्य णत्वस्य "पदव्यवायेऽपि" इत्यनेन निषेधो न स्यात् । माषाणां कुम्भ इति समासे कुम्भशब्दस्योत्तरपदत्वेन तस्य पदत्वे कर्तव्ये अनेन प्रत्ययलक्षणनिषेधे पदव्यवायाभावादिति चेन्न । अत्र पदादिविधेरुत्तरसम्बन्धित्वेन तद्भिन्नस्यापि प्रत्यासत्त्या उत्तरपदसम्बन्धिन एव ग्रहणेन यत्रोत्तरपदस्य कार्यित्वं तत्रैव प्रत्ययलक्षणनिषेधप्रवृत्त्या प्रकृते कुम्भपदस्य कार्यित्वाभावेनादोषात् ।

नन्वेवं पूर्वः दण्डी प्रियः यस्य इति अवान्तरतत्पुरुषगर्भत्रिपदबहुव्रीहौ दण्डिन् इत्यस्य तत्पुरुषीयोत्तरपदत्वात् प्रत्ययलक्षणप्रतिषेधे पदत्वाभावान्नलोपो न स्यादिति उत्तरपदे चापदादिविधा-वित्यत्र मध्यमत्वानाक्रान्तोत्तरपदस्य ग्रहणमावश्यकम् । तथा च माषकुम्भवापेन इत्यत्र कुम्भपदस्य मध्यमत्वाक्रान्तत्वादेव प्रत्ययलक्षणप्रतिषेधाभावे णत्वनिषेधः सिध्यतीति कार्यित्वनिवेशो व्यर्थ इति चेन्न। यद्वृत्त्यारम्भकसुब्निमित्तकपदसंज्ञा चिकीर्षिता तद्वृत्तिविशिष्टत्वं मध्यमत्वमित्युच्यते । वैशिष्ट्यञ्च स्वघटकार्थवदव्यवहितोत्तरत्वस्वघटकार्थवदव्यवहितपूर्वत्वोभयसम्बन्धेन । पूर्वदण्डिप्रिय इत्यादौ दण्डिन्नित्यस्य बहुव्रीहिवृत्यारम्भकसुब्निमित्तकपदसंज्ञायाश्चिकीर्षितत्वेन तादृशबहुव्रीहिघटकार्थवत्पूर्व-शब्दोत्तरत्वस्य तद्वृत्तिघटकार्थवत्प्रियशब्दाव्यवहितपूर्वत्वस्य च दण्डिन्नित्यत्र सत्वेन निरूक्तोभय सम्बन्धेन वृत्तिविशिष्टत्वादस्ति मध्यमत्वाक्रान्तत्वम् । तत्पुरुषगर्भतत्पुरुषे माषकुम्भवापेनेत्यत्र कुम्भपदस्य माषकुम्भ इति प्रथमसमासारम्भकसुब्निमित्तकपदसंज्ञायाश्चिकीर्षितत्वेन तत्र कुम्भपदे तादृशतत्पुरुषवृत्तिघटकार्थवन्माषपदाव्यवहितोत्तरत्वसत्वेऽपि तद्वृत्तिघटकार्थवदव्यवहितपूर्वत्वस्याभावेन निरूक्तोभयसम्बन्धेन वृत्तिवैशिष्ट्याभावान्नास्ति मध्यमत्वाक्रान्तत्वमिति उत्तरपदत्वे चेति निषेधाप्रवृत्तये कार्यित्वनिवेशस्यावश्यकत्वात् ।

न च मध्यमत्वपरिष्कारे सोऽपि कार्यः, कार्यित्वनिवेशोऽपीति गौरवम्। अतः कार्यित्वनिवेशो मास्तु, मध्यमत्वपरिष्कारोऽपीति वाच्यम् । एतादृशमध्यमत्वानाक्रान्तोत्तरपदस्य पदत्वे कर्तव्ये एव प्रत्यय-

लक्षणनिषेधस्य परमलोम्निशयः परमलोम्निचरः इत्यादाववान्तरकर्मधारयगर्भालुक्समासे लोमन्नित्यत्र नलोपाभावसम्पादनायावश्यकत्वात् । अन्यथा सामान्यतो मध्यमत्वाक्रान्तत्वस्य लोमन्नित्यत्रापि सत्वेन उत्तरपदत्वे चेत्यस्याप्रवृत्तौ लोमन्नित्यस्यान्तवर्तिनीं विभक्तिमाश्रित्य पदत्वात् नलोपापत्तेः । अत एव वक्ष्यमाणैतत्प्रत्याख्यानपक्षेण न फलभेदः । अन्यथा प्रत्याख्यानपक्षे यजादौ सुपि अवान्तरसुबन्तस्यापि भत्वेन लोमन्नित्यस्य पदत्वाभावात् नलोपाप्रवृत्तिः । आरम्भपक्षे तु प्रत्ययलक्षणनिषेधाप्रवृत्त्या पदत्वे नलोप इति फलभेदः स्यात् ।

न च आर्द्रगोमयेण शुष्कगोमयेणेत्यादौ पदव्यवायेऽपि इति निषेधाप्रवृत्तये "अतद्धित इति वक्तव्यम्" इति वार्तिकं तत्र पठितम् । तत्प्रत्याख्यानाय भाष्यकारैः पदव्यवायेऽपीत्यत्र "पदे व्यवायः" इति सप्तमीसमासोऽङ्गीकृतः । तथा चार्द्रगोमयेण इत्यादौ पदे परतः व्यवायो नास्ति, अपि तु प्रत्यये इति निषेधाप्रवृत्तिः । तत्पक्षे माषकुम्भवापेनेत्यादौ गतिकारकोपपदानामिति सुबुत्पत्तेः प्रागेव कृदन्तेन समासे वाप इत्यस्य पदत्वाभावेन पदे परतः व्यवायो नास्तीति निषेधाप्रवृत्त्यापत्तिरतोऽत्र पदपदं पदत्वयोग्योपलक्षकम् । तथा च वापेत्यस्य पदत्वयोग्यत्वात् सङ्ग्रहः, मयट अयोग्यत्वाद्यावृत्तिश्च सिध्यति। एवमेव माषान् पाति इति माषपः (कण्टकविशेषः) माषपान् वपति इत्युपपदसमासे माषपवापेन इत्यत्र प इति कृदन्तेन माषपदस्य सुबुत्पत्तेः प्रागेव समास इति प इत्यस्य पदत्वाभावात् पदेन व्यवाय इति तृतीयासमासपक्षेऽपि णत्वनिषेधसिद्धये पदपदस्य पदत्वयोग्योपलक्षकत्वस्यावश्यकतया माषकुम्भ-वापेन इत्यत्र कुम्भपदस्य प्रत्ययलक्षणनिषेधप्रवृत्त्या पदत्वाभावेऽपि तद्योग्यतास्तीति णत्वनिषेधसिद्धेः पुनः कार्यित्वनिवेशो विफल एवेति वाच्यम् । पदपदस्य पदत्वयोग्ये लक्षणाश्रये गौरवात्। गतिकारकोप-पदानामित्यस्य अनित्यत्वेन माषकुम्भवापेन माषपवापेन इत्यादौ सुबुत्पत्त्यनन्तरमेव समास इति पदे व्यवाय इति सप्तमीसमासपक्षेऽपि णत्वनिषेधसिद्धिः ।

भाष्ये इदं वार्तिकं प्रव्याख्यातम् । "यचि भम्" इत्यत्र सुप्तिङन्तमित्यतः सुबित्यनुवर्त्त्य यजादौ असर्वनामस्थाने परतः तत्प्रकृतिर्भसंज्ञा, यजाद्यसर्वनामस्थानपरं सुबन्तं यद्यस्ति तदपि भसंज्ञकं भवतीति वाक्यभेदेन व्याख्यायते । तेन परमवाचा इत्यादौ वाच् इत्यस्य भत्वेन पदत्वाभावात् कुत्वं न । एवं स्वादिष्वसर्वनामस्थाने इत्यत्र स्वादिषु इति योगं विभज्य, स्वादिषु परतः पूर्वस्य पदसंज्ञां विधाय, असर्वनामस्थाने इत्यत्र सुप्तिङन्तमित्यतः सुबित्यनुवर्त्य, यचि भमित्यतः यचीत्यपकृष्य, प्रसज्यप्रतिषेधमाश्रित्य, यजादौ सर्वनामस्थाने परतः पूर्वं पदं न भवति, यजादिसर्वनामस्थानपरं सुबन्तं यद्यस्ति तदपि पदं न इति वाक्यद्वयं स्वीक्रियते । तेन सुवाचौ इत्यादौ पदत्वाभावात् कुत्वाभावसिद्धिः । अत्र चोभयत्र यजाद्यसर्वनामस्थानपरकं यजादिसर्वनामस्थानपरकञ्च सुबन्तमव्यवहितमेव गृह्यते । तेन राजपुरुषेण राजपुरुषावित्यादौ नलोपसिद्धिः । दधिसेचौ इत्यत्र षत्वाभावस्तु सात्पदाद्योरित्यत्र पदादादिः इति पञ्चमीसमासाश्रयेणेन साध्यः ।

# इकोऽचि विभक्तौ

**श्री के.एल्. श्रीनिवासः, शृङ्गगिरिः**

इकः, अचि, विभक्तौ इति पदत्रयघटितं सूत्रमिदं पाणिनीयाष्टके, सप्तमस्याध्यायस्य प्रथमे पादे त्रिसप्ततितमम् । इकः इत्यस्य अंगस्येत्यधिकृतं विशेषणम् , तदन्तविधौ इगंतस्यांगस्येति लभ्यते । "अचि" इति "विभक्तौ" इत्यस्य विशेषणम् , तदादिविधौ अजादौ विभक्तौ इति लभ्यते । विभक्तौ इति तु परसप्तमी । "नपुंसकस्य झलचः" इत्यतः"नपुंसकस्य" इति, "इदितो नुम्धातोः" इत्यतः "नुम्" इति चानुवृत्तम् । तथा च इगंतस्य क्लीबस्य नुम् स्यादजादौ विभक्तौ, इति सूत्रार्थः सम्पद्यते । त्रपुणे, त्रपुणः इत्यादीन्युदाहरणानि ।

सूत्रे इकः–इति कुतः ? इति चेत् तदभावे लिही इति रूपासिद्धिः । लिह् इति शब्दात् "औ" प्रत्यये तस्य "नपुंसकाच्च" इति शीभावे "लिही" इति रूपम् । सूत्रे इकः इत्यस्याभावे, क्लीबस्यांगस्य नुम् अचि विभक्तौ इत्यर्थे सम्पद्यमाने लिह ई इत्यादौ हलन्तस्यापि अंगस्य नुम् स्यात् । एवं सति, नुमः मित्वात् अन्त्यादचः इकारात् परत्वे लिंहीत्यनिष्टं स्यात् । ननु "नपुंसकस्य झलचः" इत्यत्र यः अज्गृहीतः सः अत्रैव सूत्रे गृह्यताम् । "अचोऽचि विभक्तौ" इति सूत्रिते हलंतानां नुमापत्तिर्व्यावृत्ता खलु । न च "नपुंसकस्य झलच" इत्यत्र अज्ग्रहणाभावे ज्ञानानि इत्यादीनामसिद्धिरिति वाच्यम् , अचोचि विभक्तौ इत्यनेनैव तत्सिद्धेः । इति चेत्सत्यं, परं तु "अचोऽचि विभक्तौ" इति सूत्रिते अकारान्तानामपि नुम् स्यात् । एवं चेत् कुंण्डे पीठे इत्यादीनामसिद्धिः, अतः सूत्रे इकः इत्यावश्यकम् ।

विभक्तौ इति दलस्यानुपादाने इगंतस्य क्लीबस्य नुम् स्याद् इत्यर्थः स्यात् । अंगाधिकारस्थत्वात् "प्रत्यये" इति लभ्यते । एवं सति तौम्बुरवं चूर्णमिति न स्यात् । तुम्बुरुणः विकारःइत्यर्थे "तुम्बुरु" इति शब्दात् "ओरञ्" इत्यनेन अञ् तद्धितः । ञित्वदादिवृद्धौ ओर्गुणे, अवादेशे, "तौम्बुरवम्" इतीष्टं रूपम्। सूत्रे विभक्तावित्यनुपादाने, प्रत्ययसामान्ये परतः विधीयमानः नुम् तुम्बुरु "अ" इत्यवस्थायामपि प्रवर्तेत। एवं चेष्टासिद्धिः, अतः "विभक्तौ" इति ।

तर्हि अत्र अज्ग्रहणं किमर्थम् ? नच त्रपुभ्यामित्यादौ हलि विभक्तौ परतः नुम्वारणाय इति वाच्यम् । तत्र नुमि सत्यपि, तद्विशिष्टस्याङ्गस्य हलि विभक्तौ परतः "स्वादिष्वसर्वनामस्थाने" इति पदत्वे, तदंतस्य नस्य "नलोपःप्रातिपदिकान्तस्य" इति लोपे त्रपुभ्यामिति सिद्धेः । तर्हि कुतः ? इदमस्तु ; पञ्चत्रपुभ्यामित्यत्र कस्यचन स्वरविधेः प्रवृत्यर्थम् । पंचभिः त्रपुभिः क्रिताभ्यामित्यर्थे "आर्हादगोपुच्छसंख्यापरिमाणाट्ठक्" इति ठकि विवक्षिते पंच त्रपु इत्यनयोः "तद्धितार्थोतरपदसमाहारे च" इति समासः । ततः ठकि तस्य "अध्यर्धपूर्वद्विगोर्लुगसंज्ञायाम्" इति लुकि, पंचत्रपु इति प्रातिपदिकम् । ततः भ्याम्प्रत्यये पञ्चत्रपु इत्यस्य "समासस्य", इति अन्तोदात्तत्वे प्राप्ते इगन्तोत्तरपदे परतः "इगंतकालकपालभगालशरावेषु द्विगौ इति पूर्वपदप्रकृतिखरो विहितः । यद्यत्र नुम् स्यात् , तर्हि इगंतत्वव्याघातात् तादृशस्वरो न स्यात् । न च तस्य "नलोपः प्रातिपदिकान्तस्य" इति लोपे इगंतत्वमस्त्येवेति वाच्यम् । नलोपस्य स्वरविधिं प्रति "नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति"

इत्यसिद्धत्वात् । सति तु अज्ग्रहणे नुमः अप्रवर्तमानत्वात् क्लेशो नेति चेत् , एवं वक्तुं न शक्यते । पूर्वपदप्रकृतिस्वरस्तु नुम् यत्र श्रूयते "प्रञ्चत्रर्पुणे" इत्यादौ तत्र भवत्येव । तर्हि "पंचत्रपुभ्याम्" इत्यत्र कुतो न स्यात् ? तत्र हि पंचत्रपु ए इति स्थिते, ङे प्रत्यये परे "पंचत्रपु" इत्यस्य नुम् विहितः । एवं पंचत्रपु इति संघातस्य विहितत्वात् , तस्यैव इगंतत्वव्याघातकः नुम् , न तु अंगावयवस्य इगंतोत्तरपदस्य। अतः इगंतोत्तरपदस्य अनपायात् "इगंतकाल –" इति स्वरविधिः प्रवर्तत एव ।

अज्ग्रहणाभावे अतिराभ्याम् इत्यत्र "रायोहलि" इत्यात्वं न स्यात् खलु ? रायं अतिक्रान्ताभ्याम् इत्यर्थे "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" इति अति रै इत्यनयोः समासे, "ह्रस्वो नपुंसके प्रातिपदिकस्य" इति एकरस्य ह्रस्वत्वे इकारे अतिरि इति प्रातिपदिकम् । ततः भ्याम् प्रत्यये, अतिरिभ्याम् इति स्थिते "रायो हलि" इत्यात्वे "अतिराभ्याम्" इति रूपम् । सूत्रे अज्ग्रहणाभावे "अतिरि" इत्यत्र यदि नुम् स्यात् तार्हि अतिरिन् इति जाते, रैशब्दस्य नुमा व्यवधानात् हलादिविभक्तिपरकत्वाभवात् "रायो हलि" इत्यात्वं न स्यात् । इति चेत् तथापि न, अत्र "रायो हलि" इत्यात्वे, एवं नुमागमे च प्राप्ते परत्वात् आत्वमेव स्यात् । एवं च एतदर्थं नावश्यकमजिति ।

तर्हि प्रियतिसृभ्याम् इत्यत्र त्रिशब्दस्य तिसृभावो न स्यात् खलु ? प्रियाः तिस्रः ययोरिति बहुव्रीहिः । प्रियत्रि भ्याम् इति जाते अत्र पूर्वं विद्यमानं स्त्रीत्वमाश्रित्य विभक्तौ परतः "त्रिचतुरोः स्त्रियां तिसृचतसृ" इति तिसृभावः वक्तव्यः । अत्र यदि नुम् स्यात् तर्हि नुमा व्यवधानेन विभक्ति परकत्वाभावात् त्रेस्तिसृभवो न स्यात् , इति चेत् न, अत्रापि परत्वात् तिसृभावः एव प्रवर्तते । न च तिसृभावानंतरं नुम् स्यादिति वाच्यम् , सकृद्गतिन्यायेन तस्याप्रवृत्तेः ।

तर्हि इदमस्तु त्रपुशब्दात् आमि परे, नुम् नुटोर्विप्रतिषेधार्थम् अजिति । त्रपु इत्यतः षष्ठीबुहुवचन-प्रत्यये आमि परे नुटि, "नामि" इति दीर्घे "अट्कुप्वाङ्नुम्व्यवायेऽपि", इति णत्वे त्रपूणामिति रूपम् । अत्र त्रपु आम् इति स्थिते अजादिप्रत्ययपरकत्वात् नुमि प्राप्ते, "ह्रस्वनद्यापो नुट्" इति नुटि च प्राप्ते, परत्वात् नुमि प्राप्ते, "नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन" इति नुटि "नामि" इति दीर्घे त्रपूणाम् इति रूपम् । सूत्रे अज्ग्रहणाभावे नुम्नुटोर्विप्रतिषेधःएव न स्यात् । नुटः परत्वेऽपि, परान्नित्यस्य बलवत्वात् नित्यः नुमेव प्रवर्तेत । इति चेत् न, अत्र अज्ग्रहणानंतरं विप्रतिषेधे, तदनंतरं पूर्वविप्रतिषेधाश्रयणापेक्षया "नुमचिरतृज्वत् –" इति वचनसामर्थ्यादेव नुडस्तु । एकस्य नुटः प्राप्त्यै शास्त्रद्वयाश्रयणं गौरवाय खलु ?

तर्हि नुटि कृते नुम् मा भूदित्येवमर्थम् अज्ग्रहणम् । "त्रपु नाम्" इति जाते इदानीं नुम् स्यात् यदि, तर्हि नामि इति दीर्घो न स्यात् । अंगस्याजांत्वाभावात् । न च "नोपधायाः" इति भवति इति वाच्यम् । "नोपधायाः" इत्यनेन त्रपूणामिति सिद्धौ अपि, शुचीनामित्यादीनामसिद्धिः तत्र "इन्हन्पूषार्यम्णां शौ" इति इन्नंतस्य दीर्घः शावेव, सावेव इति नियमात् । इति चेत् तथापि वक्तुं नैव शक्यते, शुचीनामित्यत्र इन् लाक्षणिकः । "इन्हन्पूषार्यम्णाम्" इत्यत्र "अत इनिठनौ" इत्यादिना विहितस्य प्रतिपदोक्तस्यैव इनः ग्रहणम् , लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणमिति न्यायात् । एवं "इन्हन्–" इति सूत्राप्रवृत्तौ शुचीनामिति सिद्धम् ।

"अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः" इत्युत्तरसूत्रार्थमिति तु न वक्तव्यम् । एवं तर्हि, तत्रैव अज्ग्रहणं क्रियेत । तर्हि अत्र सूत्रे अजिति कुतः इति चेत् उच्यते, अजादौ प्रत्यये एव नुम् स्यात् , सम्बुद्धौ परतः नुम् मा भूदिति । हे त्रपु, हे जतु इत्यादौ "स्वमोर्नपुंसकात्" इति सोर्लुकि प्रत्ययलक्षणेन हल् विभक्तिपरकत्वात् नुम् स्यात् । न च तस्य "न लोपः प्रतिपदिकांतस्य" इति लोपो भवतीति वाच्यम् । "न ङिसम्बुद्ध्यो" रिति निषेधात् । नन्वत्र सोर्लुका लुप्तत्वात् "न लुमताङ्गस्य" इति प्रत्ययलक्षणप्रतिषेधः वर्तते खलु । एवं प्रत्ययलक्षणाभावे सूत्रे अज्ग्रहणमपि व्यर्थं खलु ? इति चेत् ।

एवं व्यर्थं सत् ज्ञाप्यते, "न लुमतांगस्य" इति विधिरनित्यः इति । एवं स्वीकारे सोः कदाचित् प्रत्ययक्षणेन विद्यमानत्वात् नुम्स्यात् , अतः अज्ग्रहणं सार्थकम् । अनित्यत्वस्वीकरणात् हे त्रपु, हे जतु इत्यादेः परस्य सोर्लुका लोपेऽपि, प्रत्ययलक्षणपक्षे "ह्रस्वस्य गुण" इति गुणे "हे त्रपो", "हे जतो" इत्यादि रूपम् , प्रत्ययलक्षणाभावपक्षे "हे त्रपु", "हे जतु" इत्यादि रूपम् इति रूपद्वयं सिद्धम् । अयमेव विषयः भाष्ये संगृह्य वार्तिकरूपेण पठितः –

इकोऽचि व्यञ्जने मा भूत् , अस्तु लोपः स्वरः कथम् ।
स्वरो वै श्रूयमाणेऽपि लुप्ते किं न भविष्यति ॥

रायात्वं तिसृभावश्च व्यवधानान्नुमा अपि ।
नुड्वाच्य उत्तरार्थं तु इह किंचित् त्रपो इति ॥